अच्युतग्रन्थमालायाः प्रथमं पुष्पम्,

श्रीलक्ष्मीधर-विरचिता

# श्रीभगवन्नामकौमुदी

प्रकाशटीकोपेता



प्रकाशस्थानम् —
अच्युतग्रन्थमाला-कार्यालयः
काशी

भाक्ती दूकान
नं॰ 13

अच्युतग्रन्थमालायाः
प्रथमं पुष्पम्

# श्रीभगवन्नामकौमुदी

## मीमांसाऽवारपारीणश्रीलक्ष्मीधरविरचिता
## मीमांसाधुरीणानन्तदेवनिर्मितया
## प्रकाशटीकया सहिता ।

श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौम-
साहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न-
**गोस्वामिश्रीदामोदरशास्त्रिणा**
टिप्पन्या परिष्कृत्य संशोध्य; सम्पादिता ।



काश्याम्
अच्युतग्रन्थमाला-कार्यालयात्
प्रकाशिता

वि॰ स॰ १९८४

प्रथमसंस्करणम् ] .[ मूल्यम्

श्रीः।

# प्रकाशकीयं मन्तव्यम् ।

महदिदमस्माकं प्रमोदस्थानं यदस्याः—प्रज्ञानां संस्कृतग्रन्थानां जीर्यतामामशेषतां गन्तुं चोपक्रान्तानां मुद्रणप्रचारादिभिः समुद्धाराय सत्यावश्यकत्वे प्रचलतामप्रचलताञ्च ग्रन्थानां हिन्दीभाषान्तरेण संयोज्य मुद्रणप्रचारादिभिः संजीवनाय—समधिगतात्मलाभाया अच्युतग्रन्थमालायाः प्रथमपुष्पभूतं श्रीभगवन्नामकौमुदीनामकं पुस्तकं प्रकाशमुपगतम् ।

इयं हि ग्रन्थमाला गुरुवर्यश्री१०८परिव्राजकाचार्यमहर्षिकल्पानां श्रीमदच्युतस्वामिनां नाम्नाऽनुस्यूतेति महत्सौभाग्यमस्याः ।

एते स्वामिमहोदया धर्मस्य ज्ञानस्य चाविनश्वरां तनुमधिष्ठायाद्याप्यस्मास्वेव विद्योतन्त इति नूनमपरं प्रमोदस्थानम्, अस्माद्विदितवेदितव्यान्महात्मनो बहवो जिज्ञासवस्तत्तत्त्वमनायासेनाधिजग्मुर् "यद् ज्ञात्वाऽमृतमश्नुते" सर्वोऽपि भाग्यवाञ्जनः। पाखण्डपरिपूरिते दूरीकृतार्योपदेशानुरागे स्वेच्छाप्रमाणभूतेऽत्र कलौ महान्त एते स्वामिमहानुभावा द्रष्टॄणां हृदि स्थापयन्ति प्रत्नपुरुषश्रद्धामितीदृशा एव प्रणम्या दर्शनीयाश्च महाभागाः। श्रद्धया हेलया वा सकृदपि समुच्चरितं महन्नाम व्यपनयति दुरितजालं, सूते च कल्याणपरम्परामिति महतां वचस्यास्थामाधायैवास्या ग्रन्थमालाया नाम समधिगतात्मलाभप्रसादानामच्युतस्वामिनां नाम्ना समुट्टङ्कितं तच्चरणाश्रितैरस्माभिः। महन्नामानुस्यूतेयं ग्रन्थमाला ऋषीणामुपदेशाननुसरन्ती प्रचारयिष्यति ज्ञानं समुद्भासयिष्यति च धर्मस्वरूपमिति मे दृढा प्रत्याशा।

*अन्वर्थनाम्नीयं भगवतो नाममाहात्म्यं बोधयन्ती "श्री भगवन्नामकौमुदी"* पौराणिकानां नाममाहात्म्यप्रतिपादकानां वाक्यानामर्थं विशदयति, सङ्गमयति च तानि वाक्यानि स्मृतिवाक्येभ्यः। उपपत्त्या प्रमाणैश्च समुपेतमिदं पुस्तकं भक्तानां मनोविनोदाय, भक्तिस्वरूपे विवदमानानां सन्देहसमुन्मूलनाय, जिज्ञासूनाञ्च कृते

भक्तिस्वरूपप्रकाशनाय क्षमत इति सर्वोऽपि जनः प्रतीयात्। अत्र ग्रन्थरत्नस्य महिमानं न साकल्येन वर्णयितुमिच्छत्ययं जनः, ग्रन्थस्य पुरोवर्तित्वादात्मनश्चापाटवात्।

इदं पुस्तकं श्रीमद्विराचार्यगोस्वामिदामोदरशास्त्रिमहोदयः सावधानं सम्पादितम्। प्रसिद्धं हि वैदुष्यं श्रीमतां गोस्वामिप्रवराणां, विश्रुता चैषां विकुण्ठा प्रतिभा, प्रथिता च नवनवविषयावगाहिनी शेमुषी। नूनमीदृशा एव विश्रुतवैदुष्या महान्तः पुस्तकमेतादृक् सम्पादयितुं प्रभवन्ति। तदत्र सद्घटितमित्यपरं सौभाग्यं ग्रन्थमालाया अस्याः।

आशास्महे पुस्तकमिदं भारतीयानामस्माकं हृदयात्प्रतिदिनं विलुप्यमानां नामश्रद्धां दृढीकरिष्यति, दूरमुत्सारयिष्यति नाममाहात्म्यपरिपन्थिनः कुतर्कान्।

श्रीमतामच्युतस्वामिनां चरणयोः सश्रद्धं प्रणता वयं श्रीमत आचार्यगोस्वामिदामोदरशास्त्रिमहोदयान् धन्यवादैर्योजयामः, येषां कृपयाऽसमेन परिश्रमेण च पुस्तकमिदमद्य जनसाधारणगोचरीभूतमिति निवेदयति।

विनयावनतो—
गोयनकोपाख्यो गौरीशङ्करः



# सम्पादकीयं वक्तव्यम् ।

श्रीमद्धनुमद्धोममध्यान्तर्यामिरामकृष्ण-
वेदव्यासात्मकसच्चिदानन्दविग्रहपूर्ण-
तमाह्लादिनीशचयभिन्नीकृतस्वरूपप्रेमा-
वतारभगवत्श्रीश्रीगौरकृष्णः शरणम् ।

निखिलश्रुतिमौलिरत्नमालाद्युतिनीराजितपादपङ्कजान्त !
अयि मुक्तकुलैरुपास्यमानं परितस्त्वां हरिनाम संश्रयामि ।

इह किल चेतनाचेतनात्मकत्वेन परिचीयमाने वैश्विप्रपञ्चे चेतनस्यैव साक्षात्परम्परासाधारण्येनाचेतनप्रवर्तकताऽनुभविकीत्यत्र न कस्यापि वैमत्यं, किन्तु चेतनप्रवृत्तेः स्वार्थकारुण्यान्यतरव्याप्यत्वनियमेन प्रवृत्तिम्प्रति कारणत्वेन क्लृप्तज्ञानस्येष्टसाधनत्वविषयकताया-मप्यविवादादावश्यके प्रवर्तकज्ञानीयविषयतापन्नेष्टस्य प्रवर्तमानप्रयोजनस्वरूपत्वे फलस्य चेच्छान्तरानधीनेच्छाविषयत्वेच्छान्तराधीनेच्छाविषयत्वाभ्यां मुख्यगौणभेदतो द्वैविध्यात् सुखतत्साधनरूपस्य पुनरपि नित्यत्वानित्यत्वाभ्यां मुख्यस्य दृष्टत्वादृष्टत्वाभ्यां च गौणस्य प्रत्येकं द्विरूपतया तत्रादृष्टगौणस्याधर्मत्वेन दृष्टगौणस्यार्थत्वेनानित्यमुख्यस्य कामत्वेन नित्यमुख्यस्य मोक्षत्वेन व्यवहाराद्ध धर्मार्थकाममोक्षाख्यपुमर्थरूपत्वेन चातुर्विध्यं पर्यवस्यति ।

न च भूम्ना दर्शनविशेषरीतितो दुःखसामान्याभावस्यैव मोक्षरूपतया तस्य च नित्यत्वेऽपि सुखत्वाभावात् कथमिव नित्यमुख्यताऽनुपदमुक्ता सङ्गच्छतामिति वाच्यम् ।

यत्प्रतीतीच्छया वक्त्रोच्चार्यते शब्दः स पदार्थ इत्यनुभवमनुरुध्य प्रवृत्ताद्ध 'यत्परः शब्द स शब्दार्थ' इतिन्यायाद्ध विविधप्रस्थानानि प्रचारयद्भिराचार्यैराविर्भावितेषु शास्त्रत्वेन सम्प्रतिपन्नेषु महावाक्यात्मकशास्त्रभेदापत्तिपरिजिहीर्षया प्रातिस्विकरूपेण तत्तत्प्रतिपाद्यविशेषस्यैकत्वेऽवश्यं वाच्येऽर्थादेव तत्रत्यं मुख्यत्वमपि तत्र नान्तरीयकमेवेति तदीयेतरेषु प्रतिपाद्येषु तन्निरूपिताङ्गत्वमर्थसमाजलब्धम् एवं चाङ्गमङ्गत्वादेव स्वाङ्गयनुसन्धानं प्रधानान्तरेणाप्रधानान्तरेण च विसं-

यद्मानमपि न क्षतिकरं, क्षतिकरश्च विरोधः प्रधानानामेव मिथः, विरोधश्चैकविषयतायामात्मानं लभते, ततश्चानधिगतार्थाधिगमकत्वरूपप्रामाण्यरक्षाऽऽर्थं शास्त्रान्तरेण प्रधानत्वेन प्रमापितमर्थमप्रमापयदेव शास्त्रं प्रमाणतामश्नुते नापरथेति शास्त्रीयप्रधानप्रतिपाद्यानामपि सगोत्रकलहो दूरापेतः, अतश्च मुक्तेर्दुःखाभावतां सङ्गिरमाणानि दर्शनानीहोदासीनानि खल्वन्यान्यमेव विषयं प्रधानत्वेन प्रतिपादयन्तीतीमे हि तेभ्यः श्रोतव्या आस्थेयाश्च।

मुक्तितत्त्वं पुनरस्यैव प्रधानत्वेन प्रतिपादकाद्दर्शनात् श्रुत्वाऽऽस्थेयमित्येव निरपेक्षवैदुष्यसरणिः। एतत्परश्च शास्त्रं मुक्तेरात्मलाभात्मकतां प्रतिजानानमात्मनः सच्चिदानन्दरूपतां सिद्धान्तयतीत्यर्थान्मुक्तिर्नित्यमुख्यफलात्मिकाऽप्युच्येत चेत् का हानिः।

एतादृशैतदधिगतौ चैतदीयसाधनानामनुशीलनचिन्तायां साक्षाद्दारादुपकारकताभिर्भूयसामप्येषां सङ्कलनेन पुनश्चत्वारो विभागाः कर्मज्ञानभक्तियोगाख्याः।

एषु च कर्मत्वेन प्रसिद्धानामन्तःकरणशुद्धिविधायकत्वेन; निजाङ्गसहितस्य चित्तस्थास्नुतारूपस्य योगस्य तु कर्तव्यमात्रापेक्षणीयत्वेन पूर्वनिर्दिष्टत्रयेऽपि सहकारित्वेनोपादेयतया सर्वपर्यानैः साधनप्रवरैः, सङ्ग्राह्यतौचित्यमावहति, भक्तिज्ञानयोरुदयस्य तु प्रथमसीमा कर्मप्रयुक्तातिशयाधाननैरपेक्ष्यकालः, तदा हि शुद्धसत्त्वाः सिषाधयिषवो निसर्गतो द्विविधाः—के चन विषयमात्रजातवैराग्या निर्वातुकामा भवन्ति; अपरे चात्मोपलब्धिकामा भगवत्कथाऽऽद्यनुरागिणो भवन्ति,

इयांस्तु विशेषः—पूर्वे सायुज्याधिकारिणः; उत्तरे सामीप्याद्यधिकारिणः। अयञ्च विशेषोऽनादिसंसारप्रवाहपतितानां विचित्रसंस्कारविपक्त्रिमरुचिभेदानां जीवानां स्वाभाविकतया न पर्यनुयोज्यतामर्हति।

एवञ्चात्र भक्तिशब्दो भजत्यनयेति व्युत्पत्त्या क्तिनो बाहुलिकत्वेन संज्ञाऽर्थकेन वा क्तिना निष्पन्नः साधनपरो, न तु भजनं भक्तिरित्येवंप्रकारेण फलात्मिकां प्रेमलक्षणां भक्तिमभिदधाति।

इत्थं च साधनभक्तिवाक्रान्तेषु भूयोऽतिभूयस्स्वपि भेदेषु भजनीयानुकूलताप्रयोजकत्वेनानुगतीभूतेष्वपि भक्तयाचार्यप्रवरमहात्ममू-

धर्म्यश्रीप्रह्लादसमवेतभक्तिविभाजकत्वप्रकारकतात्पर्यविषयसह्व्याऽऽश्रयाणां भक्तिविभाजकानां श्रवणत्वादीनां नवत्वस्यैवापरसकलभेदसङ्ग्राहकत्वेनाचार्यरूपैरभ्युपगमाद्, अन्यरूपाणां भक्तित्वव्याप्यस्यापि व्याप्यत्वेन भक्तिविभाजकत्वानुपपत्तेश्च।

अत्र च कीर्तनेतरेष्वष्टस्वपि यत्नपेक्षाऽर्चनीयादिसम्पादनमनोऽवधानादीनामपेक्षणात् परायत्ततया अविशिष्टतया कीर्तनमेव सजातीयापरसाधनेभ्योऽल्पोपकरणकतामवलम्बमानमापेक्षिकं सौकर्यं भजते।

अस्य च नामलीलाभ्यां विधाद्वयशालित्वेऽपि श्रवणस्मरणाध्ययनाद्यपेक्षिलीलांशात्तदनपेक्षाप्रयुक्तबहुलजीवोद्धारानुगुण्यसमृद्ध्योत्कृष्यते नामांशः, श्रद्धाऽऽद्यन्तरङ्गदेशकालशौचादिबहिरङ्गसध्रीचीनताऽनुस्यूताशेषाभ्युदयिकनैःश्रेयसिकसाधनवृन्देभ्यः सर्वनियमनाडिन्धमतया निखिलपुमर्थयावदुपायपरिग्रहिस्रोत्कृष्यतेतमां च सः।

तानीमानि भगवन्नामानि जीवपदमात्रभाजां सुभगम्भावुकताभागधेयान्येवेत्यालोच्यैवैतत्प्रभावान् प्रकाशयन्ती कुसंस्कारसन्तमसमुत्सारयन्ती सात्वतां लोचनजीवञ्जीवान् तर्पयन्ती निर्मत्सरविपश्चिन्मानसकैरवाण्युल्लासयन्ती सारस्वतरहस्यविदानन्दपयोधीन् तरङ्गयन्ती निर्विचिकित्समन्वर्थाभिधाना निर्मिता श्रीभगवन्नामकौमुदी नामतत्त्वबुभुत्सुदुर्दैवपटलीकादम्बिन्याऽद्यावधि तिरोहिताऽप्यधुनाऽधिकाशि प्रकाशमाना विजयते।

परिच्छेदत्रयात्मकेऽस्मिन्निबन्धे निबन्धा तावदादिमे परिच्छेदे पुराणवचनानामैदम्पर्यं निर्णिनीषुरेतेषामविवक्षितस्वार्थत्वस्वार्थपरत्वे विकल्प्यान्त्येऽपि भगवन्नामकीर्तनस्य पापक्षयहेतुत्वमपराकृतं प्रतिपद्य स्वतो वेत्येवं द्वैविध्येऽपि शेषे श्रद्धाऽऽदिसापेक्षयेण तन्निरपेक्षयेण वेति विचाराङ्गानि संशयान् प्रदर्श्य; यदीयमते वेदेऽपि कार्यतापरभागस्यैव स्वतः प्रामाण्यं तदितरमन्त्रोपनिषदंशानां तु तदङ्गतयैव कथं चित्तत्त्वंतस्य गुरोर्मतेन पुराणीयस्वतःप्रामाण्यस्य दुराशैवेत्यविवक्षितस्वार्थत्वमेषामापाद्यत्रौपनिषदविशेषाणां रीत्या गुरुमतं प्रतिक्षिप्योपनिषत्प्रामाण्यमभ्युपगम्यापि पुराणवचसामार्थवादिकतां व्यवस्थापयतामेषां मतेन पुराणानामविवक्षितार्थतां पूर्वपक्षयित्वा; सिद्धान्तपथमवतरन् पुष्कराजरीत्या धर्मान्तरांशे पौराणं प्रामाण्यमुररीकृत्यापि नामकीर्तनांशेऽर्थवादतां प्रतिपादयन्त्या अर्थवादत्वस्याविधित्वविधि-

शेषत्वात्परत्वरूपतानुपपत्तीः प्रदर्श्य, विवक्षितार्थपरत्वं पुराणवाक्यानां व्यवातिष्ठिपत्।

द्वितीयस्मिन् तस्मिंस्तु भगवन्नामकीर्तनस्याशेषपापक्षयसाधनत्वसिद्धान्तमाविर्भावयन् प्रतिक्षिप्तमपि तस्य पराङ्गत्वेन तथात्वं "द्विर्बद्धं सुबद्धं भवती"तिन्यायेन पुनः प्रतिक्षिपन् व्यवस्थाविकल्पसमुच्चयेषु शब्दस्वारस्यभङ्गभयेन व्यवस्थाविकल्पौ विहाय स्मार्तप्रायश्चित्ताङ्गतामुखेन समुच्चयमवलम्ब्य तर्कप्रमाणसुदृढेन प्रबन्धेन केवलस्यैव नामकीर्तनस्य तादृशत्वमवधार्य नान्तरीयकतयोपनतं कैवल्यं सविस्तरमुपवर्ण्य तदन्वयप्रतियोगिनं चोपदर्श्य नामकीर्त्तनस्यापराङ्गताबोधकायमानवचनविशेषान् समन्वाय्य श्रवणादीनां प्रत्येकं परमपुमर्थसम्पादकत्वपर्याप्तिं प्रसाध्य कर्मजन्यसंस्कारस्ययोः शक्तयोर्नरकोत्पादकताऽवच्छेदकत्वेन सिद्धामेकामुच्छिन्दानेनापि स्मार्त्तप्रायश्चित्तेनानिवर्त्यां सजातीयोत्पादकताऽवच्छेदकत्वेन सिद्धां परामेनां समूलघातं घ्नतः साधनभक्तिसामान्यस्यैवाधर्मवासनाऽत्यन्तनिरासपटिमानं निर्णीय, स्वप्रधानमेव भगवन्नामकीर्तनं कृत्स्नपापक्षयहेतुरित्युपसमहार्षीत्।

तृतीये तत्र नामकीर्तने प्रतितिष्ठापयिषितव्यस्य कैवल्यस्य यावद्दुरितनिवर्तकताऽवच्छेदककोटौ तत्सहकारिकुक्षौ वा साधनान्तरानिवेशफलकतायां पर्यवसन्नस्य परिपन्थिनीमपि व्यवस्थां स्मार्त्तोपायानामपि शास्त्रीयत्वेनाननुष्ठानलक्षणो बाधो मा प्रसाङ्क्षीदिति प्रकारान्तरेणाश्रयन् शेषे च तादृशीमपि निराकुर्वन् श्रद्धानिबन्धनामेनां सिद्धान्तयिष्यन् प्रासङ्गिकीं भक्तेरप्यधिकारितां रोचयमानो भक्ते रतिरूपतां समर्थयमानो रतेश्च स्थायित्वेन रसत्वयोग्यतायामपेक्ष्यमाणालम्बनोद्दीपनविभावानुभावसञ्चारिभावानुद्दिशन् सकृदसकृत्कीर्तनपरत्वप्रतीतं पौराणं च मिथो विरोधं परिहरन् मध्ये चाभ्यासपदार्थं विमृशन्नधिकारिताऽवच्छेदकत्वेन विवक्षितायां श्रद्धायां साङ्केत्यादिनिबन्धननामकीर्तनाधिकार्यभावापादनपूर्वकतदीयाधिकारं निदर्शयन् परमसिद्धान्तसरणिमाश्रयंस्तु प्रसङ्गतः पुराणानां वेदत्वमुपपादयन् वेदत्वेन पुराणत्वेन च व्यवहारस्य प्रयोजकं निर्दिशन् पूर्वोक्तरीत्या श्रद्धाऽपेक्षणे चक्रकादिदोषानुद्भावयन् निर्वचंश्चानुपङ्गिकान् विषयान् सकृदसकृत्कीर्तनमनुतप्तानुतप्तकर्तव्यत्वेन सङ्गमयन् सकृत्कीर्तनस्याप्रारब्धप्रा

चीनाघनिरासकत्वं प्रसाधयन् कीर्तनस्याघविघातकत्वेन मुक्तिसाधनत्वेन च द्वैरूप्ये तदङ्गताऽऽपन्नधर्माणामपि तथात्वमुपवर्णयन् कीर्तनस्य क्रियात्वेन मोक्षोपायतामाक्षिपन् यथा प्रनाड्या मोचकताऽस्य तां निरूपयन् पूर्वोक्तसिद्धान्तजीवातुरूपाः श्रुतीश्चात्र प्रमाणयन् समस्तव्यस्तत्वेन नाम्नां फलानुत्पादकतां विकल्पयन् व्यस्तस्यापि तस्य तत्तां प्रमिण्वन् समस्तानां तु संस्कारप्रचयाधायकत्वमपीति विशिष्टतामुपोद्बलयन् भगवन्नामकीर्तनादेव सकलाघक्षयो मोक्षश्चेति सपरिकरबन्धं निरदीधरत्, समापिपयिषान्ते त्रिविधान्यपि मङ्गलान्याचर्यैतन्निबन्धरत्नम्।

एवं तर्कोपबृंहितश्रुतिस्मृतिपुराणेतिहासादिभिरवधारितमपि साधनान्तर्निरपेक्षस्यैव भगवन्नामकीर्त्तनस्य परमपुरुषार्थप्रापकत्वं; नान्तरीयकतया कैमुत्यसिद्धमशेषानर्थनिवर्तकत्वं च; तथाऽप्यनादिविविधवासनावासितचेतसां बद्धमूलैषा विचिकित्सा नापसरत्येव यद् नाम्नः शब्दात्मकत्वेनार्थोपस्थापकत्वरूपदृष्टफलमन्तरेण नापरं किमपि निश्चेतुं सुशकं; न हि सिताऽनलकृपाणादिशब्दोच्चारणादेवानने माधुर्यदाहच्छेदादयोऽनुभूयन्ते केनापीति ?

अत्र केचित्-संसारिणामज्ञानामस्माकं कर्तव्याकर्तव्यनिर्णायकत्वे शास्त्रमेव परमाप्तमुपदेशकमतस्तेन यदर्थं यदुपदिष्टं तदर्थं तदस्माभिर्विधेयमिहान्यदनाशङ्कनीयमेवेति वदन्ति।

इदञ्चोत्तरं वास्तविकमपि श्रद्धालुभ्यो रोचमानमेनानेव प्रीणयितुं क्षमते नोक्तां शङ्कामपनोदयितुम्।

अन्ये-पुनर्नाम्ना कीर्त्यमानस्य नामिन एव साक्षात्तादृशफलसम्पादकत्वं; योगक्षेमसाधारणप्रयोजकतया तु परम्परया नाम्नोऽपि तन्न निवार्यत इति प्रतिपादयन्ति।

अपरे त्वाचार्यदेशीया वस्तुशक्तौ बुद्ध्यनपेक्षणादुच्चार्यमाणनामनिष्ठशक्तिसम्बद्धो भगवान् करुणया प्रसद्य नामकीर्तकोन्मुखीभूयताननुगृह्य भवाब्धेरुद्धरतीत्येवं समादधति।

एतदुत्तरमप्यापातरमणीयमेव;-सिताऽऽदीनां जड़तया तादृशत्वापत्तिनिरासेऽपि विधिरिरसितकीर्तनकर्मीभूतनामार्थस्य च चेतनत्वेन सर्वज्ञत्वेन सत्यसङ्कल्पत्वेन निखिलशक्तिकत्वादिना च तथाकर्तृत्वस्य सर्वथोपपत्तावपि साङ्केत्यादिषु भगवतोऽनुद्देश्यतया तत्रत्यनामकीर्तनविधायकशास्त्राणामननुष्ठापकत्वलक्षणाप्रामाण्यापत्तेः।

नामतत्त्वरहस्याभिज्ञाचार्यास्तु-केवलाद् नाम्न एव पूर्वोक्तमखिलसामर्थ्यमुपपादयन्ति ।

सोपपत्तिकमर्थमेनमवजिगमिषुभिरादाविदमिहावधायास्येयम्—औचित्यप्राप्ते समालोचितचर्या 'यत्परः शब्दः स शब्दार्थः' इतिन्यायसरणेरनुसरणे; प्रासङ्गिकतयाऽङ्गतया वा शब्दतत्त्वं निरूपयतामेतदनुगुणवचांस्यनास्थाय तत्तत्त्वस्यैव प्राधान्येन निरूपणं प्रतिजानतां-पद्धतिमध्यास्य शब्दीयरहस्यं निश्चिकीषुभिः प्रमातव्यम् ।

एवं च शब्दस्य भौतिकतां पारम्परिकाहङ्कारिकतां जडविभुतां नानाप्रकारावस्तुतां वा प्रतियन्तो व्यवहारस्वरूपमात्रालङ्कर्मीणा एनाः प्रतीयुर्नैतावता काऽपि क्षतिः, जातु चिदुक्तेष्वन्यतमस्मिन्नपि प्रकारे तथ्यतां चेत् प्रतिपत्तारः प्रतिपद्येरन् च्यवेरन्नेव तदा शब्दागमघण्टापथात्,

शब्दागमिनो हि शब्दस्य तदीयवाच्यार्थेन समं तादात्म्यं सिद्धान्तयन्तोऽर्थगतान् धर्मान् शब्देऽभ्युपगच्छन्तो नामिनि भगवति वर्तमानान् भवमोचकत्वादीन् नाम्न्यपि नैसर्गिकानुपापीपदन् ।

न चेत्थमपि सिताऽऽनलादिशब्दस्थलीयापदुद्धारः कथमिति वाच्यम् ?

मायाविजृम्भणशालिन्यां पादविभूतौ वृत्तिमदर्थसामान्यस्यैव मायाऽभिभूतत्वव्याप्यत्वनियमाद्, अर्थाभेदमात्रप्रयोज्ये कार्ये शब्देन सम्पादनीयेऽर्थाभिभवाभावोऽपि सहकारीति सिताऽऽद्यर्थानामभिभूतत्वेन सहकार्यभावाद् अर्थाभिभवरूपप्रतिबन्धकाद्वा न काऽप्यापत्तिः, प्रतिबन्धकाभावस्योत्पादकसामग्रीघटकतायाः सर्वसम्मतत्वात् ।

न चैवं भगवदतात्पर्यकसाङ्केत्यादिषु बुबोधयिषितव्यपरिभाषितार्थानामप्यभिभूतत्वेन तत्रत्यनाम्नोऽभीष्टफलानुत्पादकत्वापत्तिः, सिद्धान्तितं तु तत्राप्यन्यत्रत्यजातीयमेव फलमिति वाच्यम् ?

तत्र कालविशेषादीनामुत्तेजकत्वस्यापि कल्पनात्वादिति ।

शास्त्रसिद्धान्तसिद्धमेतन्नामस्वरूपं श्रीमदाचार्यपूज्यतमश्रीरूपगोस्वामिपादाः—

"वाच्यं वाचकमित्युदेति भवतो नाम ! स्वरूपद्वयं—
पूर्वस्मात्परमेव हन्त करुणं तत्रापि जानीमहे ।
यस्तस्मिन् विहितापराधनिवहः प्राणी समन्तात् भवे—

दास्येनेदमुपास्य सोऽपि हि सदानन्दाम्बुधौ मज्जति"
इत्थमुपन्यभान्त्सुः, विशेषस्त्वाकरादितोऽवसेयः।

अस्याश्च श्रीभगवन्नामकौमुद्याः प्रणेता मीमांसापारावारीणो-विपश्चिन्मूर्धन्यो श्रीमाल् लक्ष्मीधरः कदाऽऽसीदित्यस्य सूक्ष्मतमप्रमापकस्यानुपलम्भतो यावदुपलब्धमेव जिज्ञासुवृन्दायोपह्रियते, ग्रन्थकर्ताऽयं पञ्चदशशततमशकाब्दात् पूर्वं भुवं जन्मनाऽलंचकारेति प्रमातुं शक्यं, निर्दिष्टाब्दासन्नसमयावधि श्रीवृन्दावनमध्यासीनैरस्मदुपजीव्यपूर्वपुरुषैः पूज्यपादैर्माध्वसंप्रदायाचार्यैः श्रीमद्गोपालभट्टगोस्वामिचरणैः सन्दब्धे षट्सन्दर्भापराख्ये श्रीभागवतसन्दर्भे प्रकृतग्रन्थीयनामनिर्देशपुरस्सरं सानुपूर्वीकवाक्यविशेषस्योद्धृतत्वात्। सौन्दर्यलहरीव्याख्यातृप्रभृतिष्वनेकेषु लक्ष्मीधरनामकेषु कतमोऽयमस्मदीयो महाभाग इति तु निर्णेतुमधुनाऽपि नापारि। एतद्देशविषयेऽपि न किञ्चिदपि पर्यचायि।

श्रीभगवन्नामकौमुद्याः प्रकाशाख्यटीकायाः कर्ता मीमांसाधुरन्धरापदेवस्य सूनुरनन्तदेवोऽनुरूपश्च वैदुष्येऽपि पितुर्देवोपाख्यमहाराष्ट्रब्राह्मणः खिष्टीयसप्तशताब्दीतः पूर्वमासीदिति कथमपि सम्भावयितुं शक्यते।

अनयोर्मूलटीकयोर्मूलस्य पुस्तकं प्रख्यातचरवैदुषीकैर्द्वैतरहस्यप्रतिष्ठापकधुरीणैर्माध्वसम्प्रदायाचार्यैश्चर्वणीयचरणैरस्मत्तातगोस्वामिश्रीगोपीलालमहाराजैर्महता यत्नेन सङ्गृह्य पुरुषक्रमागते स्वेन वर्धिते च श्रीवृन्दावनस्थेऽस्मदीयश्रीमदनगोपालपुस्तकालये रक्षितं तत्र विराजमानैः सङ्गीतवित्शिरोमणिभिर्माध्वसम्प्रदायाचार्यैः पूज्यपादास्मद्भ्रातृविद्याभूषणश्रीवनमालिलालमहाराजैश्च प्रेषितमेकं शुद्धं च. द्वितीयं तु बहुत्राशुद्धं नयपालाभिजनकाशीवासिविनयाद्यलङ्कृतकेसर्युपाख्यश्रीपद्मनाभशर्मपण्डितस्य सौकर्यार्थमानायि; विहितं च भूरि साहायकमेनेनाशुद्धेनापि।

टीकायास्त्वेकमेव पुस्तकमुक्तकेसरिमहात्मन एव प्राप्तम्, ईदृशमकैतवमुपकारातिशयं विदधतं महाशयं येनोपमिमीमहे न तादृशमुपमानमुपलभामहे।

मूलप्रधानप्रतिपाद्यप्रयोजककर्मीभूतवृन्दिष्ठवस्तुसम्पर्कगृध्नुमनसा मया परस्परापरिचर्ययाऽप्यात्मानं पिपविषमाणेन स्थलविशेषेषु टिपन्या समयोजिषातां मूलटीके।

इत्थं विषयसूच्यादिना च सपरिकरेयं कौमुदी श्रीमता विद्याऽऽलयादिविविधानुकरणीयसत्कर्तव्यसार्थक्रियमाणकमलेन विश्ववरेण्यविद्याऽनुरागिणा सौजन्यादिगुणशेवधिना भगवद्भक्तिभाजा श्रेष्ठिवर्येण गोयनकोपाख्येन श्रीगौरीशङ्करगुप्तमहोदयेन प्रकाशयितुमुपक्रान्तायामच्युतग्रन्थमालायां प्रथमपुष्पत्वेन भगवत्कृपासूत्रेण गुम्फिता काश्यां ज्ञानमण्डलमुद्रणालये प्रकाशं नीता।

युक्तं चैतत् कः खल्वन्यो गौरीशङ्करमन्तरेण काश्यां ज्ञानमण्डलेन रात्रिन्दिवस्यास्तुं कौमुदीं प्रकाशयितुमर्हति, शोभतेतमां किल विशिष्टसम्मानभाजनश्रीमदच्युतस्वामिकृपाप्रसादोत्सबीजमानसादुदित्वरलतायां कौमुदीस्वरूपः प्रसूनतल्लजः।

टीकालेखादिकमन्येन विधाप्यादन्नमानुकूल्यमाचरिष्णोरत्रत्यविश्वविद्यालयेऽध्यापकस्य श्रीमत एम्०ए० पदवीकस्य महतोपनामकश्रीगङ्गाप्रसादशर्मपण्डितस्य सधन्यवादमुपकारगरिमाणं विभ्यजनीनतया सप्रमोदं बिभ्राणो; मादृशजनमतिमान्द्यनिबन्धना मानुष्यकलान्तरीयकदोषप्रयुक्तास्त्रुटीरुपेक्ष्य मरालपद्धिमानं गृहयालवोऽभिज्ञाः निर्मत्सराः श्रीभगवन्नामकौमुद्याः पीयूषमास्वादयेयुः समनुभवेयुश्चैतदुत्थनिरतिशयतृप्तिपरम्परामित्याशासानो मुधा विस्तराद् विरमन् प्रीयतां चानेन व्यापारेण सर्वान्तर्यामी भगवान् गौरकृष्णतनुः श्रीश्रीराधिकारमण इति तदीयं नाम भगवत् प्रार्थयमानः तदेव—

"यदाऽऽभासोऽप्युद्यन् कवलितभवध्वान्तविभवो-
दृशं तत्त्वान्धानामपि दिशति भक्तिप्रणयिनीम्।
जनस्तस्योदात्तं जगति भगवन्नामतरणे!
कृती ते निर्वक्तुं क इह महिमानं प्रभवति,"

इत्थं कीर्तयमानः प्रकृतवक्तव्यमुपसंहरति—

| | |
|---|---|
| श्रीश्रीगौरकृष्णजयन्त्या-<br>फाल्गुनपौर्णमास्यां-<br>१९८३ वैक्रमाब्दे<br>काश्याम् | श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौम-<br>साहित्यदर्शनाद्याचार्य तर्करत्नन्यायरत्न-<br>गोस्वामिदामोदरशास्त्री। |

इति शम्।

---

श्रीभगवन्नामकौमुदीस्थविषयाणामानुक्रमिकं—

## सूचिपत्रम्—

पुराणवचनीयविवक्षितार्थत्वप्रतिपादननामके प्रथमे परिच्छेदे—

## भगवन्नामकीर्त्तनस्य पुरुषार्थत्वप्रतिपादननामके द्वितीये परिच्छेदे—

## भगवन्नामकीर्तनस्य केवलस्यैव पुरुषार्थत्वप्रतिपादननामके तृतीयस्मिन् परिच्छेदे—

अत्रैतद्विवेचनीयम्—

निर्दिष्टसूचिपत्रे मूलानुसारेणैव विषयाः प्रादर्शिषत, तावतैव टीकायामपि तत्तन्मूलानुगामिन्यां दिदर्शितविषयाः सुदर्शाः; नातः पार्थक्येन टीकायां ते समसूच्यिषतेति ।

---

## प्रकाशसहिता
# श्रीभगवन्नामकौमुदी ।

॥ श्रीगणेशाय नमः ॥

श्रीगोपालं गुरुं भजे ॥

नाम्नैव नाशयति यो भवपाशबन्धं-
दाम्नैव यो व्रजवधूभिरयत्नबद्धः ॥
एवं दयाजलनिधिर्निजवर्गवश्यः
सेव्यः स मेऽस्तु सततं सुखसिन्धुरेकः ॥ १ ॥
नमस्कृत्य गुरुन्सर्ववेदान्तार्थाविरोधतः ॥
भगवन्नामकौमुद्याः प्रकाशः प्रवितन्यते ॥ २ ॥
सम्यङ्निरूपितमिदं यदि नाद्रियन्ते
दुष्टा निकृष्टमतयो हृदि मत्सरेण ॥
किं तावता ज्वरवतामरुचेर्न जातु
दुग्धस्य शुद्धमधुरस्य विदूषणं स्यात् ॥ ३ ॥

प्रेक्षावतामधिकारिणां भगवन्नाममाहात्म्यविषये निर्णयमानाय चिकीर्षितस्य निर्विघ्नपरिसमाप्त्यादिकामो भगवन्नाममाहात्म्यवर्णनमेव मङ्गलमाचरति—

## ॐ नमः श्रीकृष्णाय ।

अंहः संहरदखिलं सकृदुदयादेव सकललोकस्य ॥
तरणिरिव तिमिरजलधिं जयति जगन्मङ्गलं हरेर्नाम ॥१॥
कारुण्यामृतनिर्झरः सुरसरिज्जन्माकरः श्रीवधू—
लीलाब्जं व्रजकामिनीकुचतटीकस्तूरिकास्थासकः ॥
उत्तंसः सुरयोषितां मुनिमनोवश्यौपधीपल्लवो—
यस्याङ्घ्रिः सुरवल्लभः स जयति श्रीपुण्डरीकप्रियः ॥२॥

कररुहकुलिशैर्द्विपतां चरणाम्बुजनखरकान्तिभिर्भजताम्
हृदयग्रन्थीन् भिन्दन् मनसि नृसिंहः समुल्लसतु ॥३॥
यदङ्घ्रिरेणुबीजानि जनैरुप्तानि मूर्द्धसु ॥
सद्यः सुरद्रुमायन्ते श्रीधरः स श्रियेऽस्तु वः ॥४॥
उल्लसति लोचनाग्नौ जगदघदानानि जुह्वतो यस्य ॥
प्रथमाहुतिर्मनोजः स जयति देवः पुरां भेत्ता ॥५॥

यत्पादपद्मनखकान्तितरङ्गजीर्ण्य—
जम्यालजाड्किकधियां न धियामभूमिः ॥
निःसीमसौख्यजलधिर्जयतादनन्तः
सोऽस्मद्गुरुर्जगदनुग्रहजागरूकः ॥६॥

अपि च

अर्धीशं निःस्वानां शमनदतटीपु प्रवसता-
मशेपाणामाद्यं गुणगरिमनिर्मुक्तमपि यम् ॥
मृपामानाद् दूरं श्रुतिरुपचरन्ती सविनयं-
शनैर्यत्नादन्तर्णयति सुभगानां परिवृढम् ॥७॥
चेतश्चकोरसन्तोपपीयूपाम्बुधिवृद्धये ॥
इयं विस्तार्य्यते श्रीमद्भगवन्नामकौमुदी ॥८॥

अंह इति। दुरितं पापं दुःखं चेत्यर्थः, दुरितनिवर्तकत्वं वचनाद् दुःखनिवर्तकत्वं तु श्रान्तानां सद्यो विश्रान्त्यनुभवात् संशब्देन रोगादिनिवर्तकत्वं सूच्यते, तदुक्तं—

सर्वरोगोपशमनं सर्वोपद्रवनाशनम् ।
शान्तिदं सर्वरिष्टानां हरेर्नामानुकीर्तनमिति ॥

अखिलं समस्तं, न विद्यते खिलं परिशिष्टं वासनारूपं यत्रेति संहरणक्रियाविशेषणं वा, सकृदित्यभ्यासानपेक्षत्वं—

"सकृदुच्चरितं येन हरिरित्यक्षरद्वयमि"—

इत्यादिवचनात्, सकलेति सर्वाधिकारित्वं, जगन्मङ्गलं जगतां सकलकल्याणप्रदं—

सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यद्वाऽभिरोचते नाम तत्सर्वार्थेषु योजयेदिति—

वचनात् । हरेरिति विशेषणत्वनिर्देशेन पापक्षये भगवत्स्वरूपानुसंधानानपेक्षत्वम्—

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्वृकैरिवेति—

वचनाद्, अत्र हरिशब्देन सर्वज्ञः सर्वेश्वरः सर्वाधारः परमात्मा यो वेदान्तिभिर्मायोपहितं चैतन्यमित्यभिधीयते, षष्ठ्या च सम्बन्धवाचिन्या वाचकत्वं, ततश्च विश्ववषट्कारादिशब्दानां सहस्रनामस्तोत्रान्तर्गतानामपि न बहिः पापक्षयार्थं प्रयोगः तेषां परमेश्वरवाचकत्वाभावाद्, नाप्यात्मादिशब्दानां जीवेश्वरसाधारणानां वस्त्वादिशब्दवत् ।

---

श्रीश्रीगौरकृष्णः शरणम् ।

भगवत्प्रेमदं तस्य नाम नाम नमन् यते ।
सव्याख्यभगवन्नामकौमुद्याष्टिप्पनीं प्रति ॥

१—अत्रेदं विवेचनीयम्—भगवद्वाचकता सहस्रनामस्तवघटकनाम्नां या टीकाकृतोक्ता सा न प्रामाणिकी, तथा हि तेषां नाम्नां भगवद्विषयकबोधजनकत्वाभावे वैयर्थ्यमेव, बोधकत्वे चार्थबोधौपयिकः संबन्धः शब्देष्वावश्यकः, स चाभिधा लक्षणा वा, आद्या चेद्वाचकत्वं दुर्निवारमेव, द्वितीया चेत् कथमाद्यां विनाऽन्यस्या अवसरः, शक्यसंबन्धो हि लक्षणा, शक्त्यभावे कथमिव लक्षणाया उन्मेषो, वाचकत्वाभावे च कुतस्त्या शक्तिरिति सुधियो विदाङ्कुर्वन्तु, । यदप्युक्तं सहस्रनामस्तोत्रान्तर्गतानां नाम्नां न बहिःपापक्षयार्थं विनियोग इति तदपि निर्मूलं, स्तोत्राद्बहिस्तेषां पापानाशकत्वं; किं कस्यापि प्रतिबन्धकस्य सद्भावादुत भगवदनुपस्थापकत्वाद्, नाद्यः; तस्य दुर्वचत्वाद्, नान्त्यः, तथात्वे सुकृतोत्पादकत्वमपि तेषां दुरुपपादम् , एवं च "*प्रमाणं प्राणनिलय*"इत्यादितः प्रमाणशब्दस्य भगवदुपस्थापकत्वेन मङ्गलार्थकतेत्यादिरूपा न्यायदर्शनप्रथमसूत्रव्याख्याने विश्वनाथन्यायपञ्चाननाद्यभियुक्तानामुक्तयो विरुध्येरन्, स्वयं च स्वपितृकृतन्यायप्रकाशटीकाभाट्टालंकारे ग्रन्थारम्भमङ्गलपद्यव्याख्याने "आनन्दो नन्दनो नन्द" इति सहस्रनामघटकानन्दनाम भगवत्परत्वेन व्याचक्षाणः कथमिवात्र प्रतीपमाचरन् संचुकोच । एतेनानुपदमेवात्मादिशब्दानां भगवद्वाचकत्वोक्तिरपीदमीयाऽनुपादेया च, आत्मशब्दस्य जीवेश्वरसाधारणस्य चेतनत्वं चैतन्यत्वं वा वाच्यतावच्छेदकं नेश्वरत्वमित्यन्यदेतद् ।

ननु रामकृष्णादिशब्दानामसंग्रहापत्तिः तेषां परमेश्वरवाचकत्वाभावाद् भावे वा रामे कृष्णपदप्रयोगापत्तिः कृष्णे रामपदप्रयोगापत्तिः न चैवं पुराणेषु लोके वा दृश्यत इति चेत् ? तेऽपि तद्वाचका एव किंतु यदुकुलप्रसूतत्वं कृष्णशब्दे रघुकुलप्रसूतत्वं रामशब्द उपाधिः; तद्विशिष्टे परमेश्वरे वा शक्तिः, एवमन्येष्वपि शब्देषु द्रष्टव्यम् । नामशब्देन प्रातिपदिकं, तच्च द्विविधं[1] रूढं यौगिकं च, रामकृष्णगोविन्दनारायणशिवशङ्करेत्यादि रमारमणपार्वतीरमणेत्यादि च, तच्च विभक्तिसहितं तद्रहितं वा यथा रामः कृष्ण इत्यादि हरि विष्णु इत्यादि, न च विभक्तिरहितस्यापशब्दत्वात्तस्य च निषिद्धत्वादनुच्चारणमिति वाच्यं, "विष्णोर्नामानुकीर्तयेदि" ति विधिविहिते निषेधाप्रवृत्तेः, किंच शक्तिशून्यत्वमपशब्दत्वं, न च हरिविष्ण्वादिप्रातिपदिकस्य शक्तिशून्यत्वं तथा सति गावीगोण्यादिभ्य इव विभक्त्यनुत्पादप्रसङ्गाद्, न हि गोप्रातिपदिकस्यापशब्दत्वं व्यवहरन्ति; वाक्यार्थानुपयोगितया न प्रयुञ्जते परं, विष्णुनाम तु विधिवशाददृष्टार्थमुच्चार्यत एवमेव च शिष्टाचारः, तदयं श्लोकतात्पर्यार्थः, विष्णोर्नाम शास्त्रीयवैराग्यवतां श्रवणाद्यधिकारिणां तत्त्वमस्यादिवाक्यार्थमखण्डं चैतन्यं लक्षणयोपस्थापयतु; भक्तानां च भगवन्तमुपस्थापयतु; तदुभयविलक्षणानामतिरागिणां च चण्डालपर्यन्तानां तु किंचिदुपस्थापयतु तत्सर्वथा संकीर्त्यमानं सर्वदोषराशीन्विनाशयति सूर्य इव तमोजालं सर्वाभीष्टं च प्रयच्छतीति ॥१॥

अत्र ग्रन्थे भगवान्महाविषयः भगवद्भक्तिर्महाप्रयोजनं मुक्तिश्चेति सूचयन् भगवन्तं स्तौति-कारुण्येति । पुण्डरीकनामा भक्तः प्रियो यस्येति विट्ठल इत्यर्थः, यस्याङ्घ्रिः कारुण्यमेवामृतं तस्य निर्झर इव, सुरसरिद् गङ्गा तस्या आकरः खनिरिव, श्रीवध्वा लीला क्रीडा तत्सम्बन्धि अब्जं कमलमिव, व्रजवामिनीकुचतटीसम्बन्धी कस्तूरिकाम्वासकः

---

[1]—इदमापाततो, योगरूढयौगिकरूढे अपि बोध्ये । तत्र पदाघटितशक्तताऽवच्छेदकसमुदायत्ववत्त्वं रूढत्वम् । पदघटितशक्तताऽवच्छेदकत्वाभाववत्समुदायत्ववत्त्वं यौगिकत्वम् । रूढिशक्यताऽवच्छेदकविशिष्टधर्मावच्छिन्नशक्तपदघटितसमुदायत्ववत्त्वं योगरूढत्वं, वैशिष्ट्यं च सामानाधिकरण्यसंसर्गेण । रूढ्याश्रयताऽवच्छेदकं यद् रूढ्यर्थताऽवच्छेदकव्यधिकरणधर्मावच्छिन्नशक्तपदघटितसमुदायत्वं तद्वत्त्वं यौगिकरूढत्वम् ।

कस्तूरिकाया लेप इव, सुरयोषितां कृष्णपत्नीत्वं गतानामुत्तंसो भूषणमिव, मुनिमनसां वशीकरणार्थौषध्याः पल्लव इव ॥२॥

कररुहाणि करनखानि तान्येव कुलिशानि वज्राणि तैर्द्विषतां हिरण्यकशिपुप्रभृतीनां हृदयग्रन्थीन् वक्षस्थलानि ग्रन्थय इव तान् भिन्दन् विदारयन्, भजतां प्रह्लादादीनां हृदयग्रन्थीन् पदकमलनखदीधितिभिर्भिन्दन् ॥३॥४॥

उल्लसति प्रदीप्ते नेत्राग्नौ जगतो हविःस्थानीयस्यावदानानि जुह्वतो यस्य महारुद्रस्य मनोजो मदनः प्रथमाऽऽहुतिः स पुरां भेत्ता त्रिपुरारिर्जयतीति ॥५॥

*यत्पादपद्मनखकान्तेस्तरङ्गैरेकदेशेन जीर्णमशयजम्बालं पङ्क इवैता*-दृशं जाड्यं तेन जाड्किकधियां प्रसरणशीलबुद्धीनां शिष्याणां धियां चित्तवृत्तीनां निःसीमसौख्यजलधिरभूमिरविषयो न यच्छिष्या अतिसुखिन इत्यर्थः । यद्वा यच्छिष्यधियामविषयो नास्ति सर्वज्ञा इत्यर्थः । सोऽसद्गुरुर्जयताद्, जागरूकः सावधानः ॥६।

निर्गतं स्वं ममताऽऽस्पदं येषां विरक्तानामित्यर्थः अधीशं स्वामिनं, शम एव नदस्तत्तटीषु प्रवसतां तिष्ठतामशेषाणामाद्यं मुख्यं, गुणा विषयास्तेषां गरिमा गुरुत्वं भारस्तेन निर्मुक्तं रहितं सर्वसंन्यासिनम्, अपिशब्दोऽनुक्तदमादिविशेषणसमुच्चयार्थः, मृषामानादहंकाराद् दूरं निरहंकारं यं गुरुं श्रुतिः श्रवणोपलक्षिता विधोपचरन्ती सेवमाना, अन्तर्णयति = अन्तर्मुखं प्रत्यक्प्रवणं संपादयति सविनयं विनीतं शनैर्यत्नादित्यभ्यस्तत्वं सूचितम् । अत्र शमादिसंपन्नत्वं सर्वसंन्यासित्वं निरहंकारत्वं विनीतत्वं चेति श्रवणाधिकारिविशेषणानि *पञ्चभिर्विशेषणैरुक्तानि श्रुतिरुपचरन्ती शनैर्यत्नादिति* श्रवणाद्यभ्याससंपत्तिरुक्ता अन्तर्णयतीति श्रवणादिफलं साक्षात्कार उक्तः अत एव सुभगानां परिवृढं भाग्यवन्तम्, *अत्रायं श्लेष*[1]*प्रतिभासः*

---

१—चिन्त्यमेतद्, यत्रार्थद्वयस्यापि प्रकृतत्वमप्रकृतत्वं वा तत्रैव श्लेषः, प्रकृते श्रुतेः प्रकृतत्वेन कामिन्याश्चाप्रकृततया न श्लेषव्यवहारः, यद्यपि प्रकृताप्रकृतविषयोऽपि श्लेषो नव्यैः स्वीकृतस्तथाऽप्यसौ विशेषणमात्रश्लिष्टतास्थले, यदि तु विशेष्यस्यापि श्लिष्टतायां श्लेष एव स्यात्तदा शब्दशक्तिमूलध्वनिसूच्छेदैव, न चाप्पयदीक्षितादिभिः प्रकृताप्रकृतश्लेषोऽङ्गीकृतो विशेष्यश्लेषसारेऽपीति वाच्यम्,

यथा प्रौढा कामिनी निःस्वानामधीशमतिनिर्धनमपि तत्तद्देशेषु प्रवसन्तमपि बहुगुणशून्यमपि कं चन पुरुषं सुभगानां परिवृढमतिसुन्दरं मृषामानाद् दूरं मनःपूर्वकं मानेन सत्कारेण सविनयं शनैर्यत्नाद्धृतप्रेमणादिनाऽन्तर्णयतीति, यद्वा श्रुतिस्तत्त्वमस्यादिवाक्यम् अधीशं परमेश्वरम् अशेषाणामाद्यं गुणगरिमनिर्मुक्तं निर्गुणं मृषामानाद् दूरं प्रत्यक्षादिमानागोचरं परिवृढमपरिच्छिन्नं यं गुरुस्वरूपं निःस्वानां विरक्तानां शमनदनदीषु प्रवसतां शान्तानामत एव सुभगानां "न वैराग्यात्परं भाग्यमिति" प्रसिद्धेः साधनचतुष्टयसंपन्नानां प्रत्यर्थः, अन्तर्णयति अभेदेन बोधयति सविनयं शनैर्यत्नादित्यभ्यासादितात्पर्यलिङ्गोपेतत्वं सूच्यते, निर्गुणमप्युपचारेण प्रतिपादयतीत्याह—उपचरन्तीति ॥७॥ चिकीर्षितं प्रतिजानीते-चेत इति भगवन्नामकौमुदीति ग्रन्थनाम कौमुदी चन्द्रप्रकाशः चकोराणां पक्षिविशेषाणां संतोषवृद्धये समुद्रवृद्धये च भवति, इयमपि प्रेक्षावतां चेतश्चकोरसंतोष एव पीयूषममृतं तस्याम्बुधिः समुद्रस्तस्य वृद्धये क्रियते ॥८॥

अत्र श्रीमद्भगवन्नाममाहात्म्यप्रतिपादकानि पुराणवचनान्युदाहृत्य विचार्यन्ते—किमेतान्यविवक्षितस्वार्थान्युत स्वार्थपराणीति? यदा स्वार्थपराणि; तदाऽपि किमात्तपापक्षयहेतोः कस्य चिदङ्गभावेन भगवन्नामकीर्तनं पापक्षयहेतुः; उत स्वप्राधान्येन? यदाऽपि स्वप्राधान्येन तदाऽपि किं श्रद्धाभक्तिज्ञानवैराग्याभ्यामदेशकालविशेषादिसापेक्षत्वेन; उत तन्निरपेक्षत्वेनेति?

अस्य विचारस्य सकलश्रुतिस्मृतीतिहासपुराणागमार्थसन्तत्वसन्देहसन्दोहततालविन्नचरणनखचन्द्रिकाऽञ्जल-

---

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्—

इत्यादिसिद्धान्तविरोधात्, एवं चात्राप्रकृतविशेष्यस्य पार्थक्येनानिर्देशात्र श्लेषो, नापि शब्दशक्तिमूलध्वनिः प्रकृतविशेष्योपस्थापकपदस्यानुभयार्थकत्वात् किन्तु प्रकृतविशेष्यभूतायाः धनेरदिश्यतया समासोक्तिः।

स्य श्रीमदनन्तानन्दरघुनाथस्य करुणाकादम्बिनीमुक्तसूक्तिसुधोद्धारासारैः स्मृतिपुराणवचनविरोधाभासभावितनितान्तमसृणशङ्कापङ्कप्रक्षालनेन तस्यैव रघुराजशिरोमणेः सर्व्वतः प्रसृमरपरमकारुण्यसुधाऽर्णवस्य निरङ्कुशमहिमधामनि श्रीरामनामनि स्वचेतसः समाधानमेव प्रयोजनं, तत्र केपाञ्चिदतिसाहसिकानामत्यावेशोऽयमनूद्यमानोऽपि महापतनहेतुरपि भगवन्नाममाहात्म्यमननस्य भगवदुपासनासमानसौभाग्यत्वान्निराकरणार्थमनूद्यते—

ग्रन्थस्य साक्षाद्विषयमाह—अत्रेति ग्रन्थइत्यर्थः। पुराणवचनानि

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।

नामव्याहरणं विष्णोर्यतस्तद्विषया मति-

रित्यादीनि, विचाराङ्गं संशयमाह—किमेतानीति। एतेषां स्वार्थः नामोच्चारणस्य पापक्षयहेतुत्वरूपो विवक्षितो न वेत्यर्थः, संशयबीजं च पापविशेषो लोके वेदे चोभयविधवाक्यदर्शनं, संशयान्तरमाह-यदेति। कस्य चिदिति। मन्वायुक्तप्रायश्चित्तस्येत्यर्थः। स्वप्राधान्येन स्वातन्त्र्येणेत्यर्थः, संशयान्तरमाह, तदाऽपीति। स्वातन्त्र्येऽपीत्यर्थः। श्रद्धा = आस्तिक्यबुद्धिः, भक्तिः = परमेश्वरविषयज्ञानं, विवेको = वैराग्यं विषयेषु, अभ्यासो नामावृत्तिः, देशः काश्यादिः, कालः कर्मोपरमादिः, आदिशब्देन शुचित्वादि, विचाराङ्गमवान्तरप्रयोजनमाह-अस्येति। अस्य विचारस्य रघुराजशिखामणेः श्रीरामनामनि चेतसः समाधानं स्थैर्यविश्वासविशेष एव प्रयोजनमित्यन्वयः। तत्र द्वारमाह स्मृतीति, स्मृतीनां मन्वादिप्रणीतानां च द्वादशाब्दादिनाशस्य पापस्य कथं तन्नाममात्रेण निरास इत्येवंरूपो विरोधाभासो न तु विरोधः तेन भावितः कृतो नितान्तं मसृणश्चिक्कणो दृढः शङ्कापङ्कः तस्य प्रक्षालनेनेति संशयनिराकरणं द्वारमित्यर्थः। तत्र हेतुमाह—श्रीमदिति। श्रीमदनन्तानन्दो नाम गुरुः स एव रघुनाथस्तस्य करुणैव कादम्बिनी मेघमाला तया मुक्ता ये युक्तिसुधोद्धारा युक्तय एव सुधा = अमृतं तस्योद्धारा उत्कटधारा आसारा वृष्टयः ताभिरित्यर्थः युक्तिपदस्थाने सूक्तिपदपाठः क्व चित् तत्र सूक्तयो वाक्यानि, किंलक्षणस्येत्यत आह-सकलेति।

आगमो मन्त्रशास्त्रं श्रुत्यादीनामर्थस्य सतत्त्वं तत्त्वं तत्र संदेहसंदोहः संशयसमूहः स एव लता तस्या लवित्रं लवनसाधनं चरणनख-चन्द्रिकाया अञ्चल एकदेशो यस्येति, अनेनानायासतः सकलसंशय-निवर्तनसामर्थ्यं गुरोः सूचितं तस्यैव पूर्वं गुर्वभेदेनोक्तस्य प्रसृमरं-प्रसरणशीलं परमकारुण्यं सैव सुधा तस्या अर्णवस्य, परमकारुणिक-त्वमेवाह—निरङ्कुशेति । निरवधिकशक्तियुक्ते;

नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकी जन-

इति वचनाद् द्वादशाब्दादिप्रायश्चित्ते क्लिश्येयुर्जना इति परमका-रुणिकतया तादृशं नाम निर्मितं भगवतेति भावः । स्वचेतस इति । स्वश-ब्देनौद्धत्यपरिहारः, परीक्षकाणां चेतःसमाधानं प्रयोजनमित्युक्त औद्ध-त्यमिव भायाद्, वस्तुतस्तु तदेव प्रयोजनं, विचाराङ्गपूर्वपक्षरचनां प्रतिजानीते-तत्रेति । भगवन्नाम्नि विषय इत्यर्थः । अयं वक्ष्यमाणः केषां-चिदतिसाहसिकानामावेशोऽनूद्यत इति संबन्धः, परमपुरुषार्थप्रच्युत-त्वान्नरकपातोन्मुखत्वाच्चातिसाहसिकत्वमनूद्यमानोऽपि महापातक-हेतुः किमुत कृतः

अर्थवादं हरेर्नाम्नि संभावयति यो नरः ।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटमि-

त्यादिवचनात्, तादृशोऽप्यनूद्यते निराकरणार्थम् । ननु तथाऽपि महापातकं स्यान्नेत्याशयेनाह-भगवदिति । निराकरणार्थानुवादस्य भगवन्नाममाहात्म्यमनने पर्यवसन्नत्वात्तस्य च भगवदुपासनासमान-त्वात्पापक्षयहेतुरेवायमनुवादो न पापहेतुरिति भावः । मननस्येति । युक्तिनिरूपणात्मकग्रन्थकरणस्येत्यर्थः । उपासना भजनं राजानमुपास्त इत्यादौ तथा दर्शनात्, तत्समानफलत्वं चापातत उक्तं मननस्य, तथा हि भजनं श्रवणकीर्तनादिरूपं नवविधं, कीर्तनं च द्विविधं नामकीर्तनं गुणकीर्तनं च, तत्र यथा भगवच्चरणारविन्दस्य माहात्म्यनिरूपणं लाव-ण्यनिरूपणं वा भगवद्गुणकीर्तनमेव, एवं भगवन्नाममाहात्म्यनिरूपणं विशेषतो युक्तिभिः क्रियमाणं भगवद्गुणकीर्तनमेव । नन्वेवमेतस्य ग्रन्थस्य भगवत्स्तुतित्वमापद्येतेति चेद् इष्टमेवैतद् न चैतावता मुखमसु त्वमिन्द्रस्त्वं चन्द्र इत्यादिवदसद्गुणारोपो भगवति मन्तव्यो "विष्णोर्नु कं वीर्याणि" इत्यादिश्रुतिभिर्भगवतोऽसंख्यगुणवत्त्वावधारणाद्, यथा

उपासना = अनन्यविषयतया सप्रेम ध्यानं, तत्समानफलं भगवन्नाममाहात्म्यनिरूपणं गुणकीर्तनात्मकं—

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवमि—

त्यादिवचनादिति।

तद्यथा—अविवक्षितस्वार्थान्येव पुराणवचनानीति, तथा हि कार्य्य एवार्थे वेदस्य प्रामाण्यं न सिद्धे; तत्रैव शब्दस्य शक्तितात्पर्य्ययोरवधारितत्वात् ततश्च विधिवाक्यस्यैव स्वार्थे प्रामाण्यं न मन्त्रार्थवादोपनिषदां किन्तु तासां कथंचित् क्रतुविध्युपयुक्तार्थत्वं जपार्थत्वं वा, इतिहासपुराणयोस्तु तन्मूलत्वान्नतरां स्वार्थे प्रामाण्यगन्धोऽपीति।

गुरुमतेन पूर्वपक्षं दर्शयति—तद्यथेति। नाममाहात्म्यप्रतिपादकानीति शेषः। कार्ये कृतिसाध्ये, सिद्धे कृत्यसाध्ये तत्रैव कार्य एव गवादिपदानां शक्तेः, वाक्यानां गामानयेत्यादीनां च तात्पर्यस्यावधारणादित्यर्थः। कार्यान्विते स्वार्थे पदानां शक्तिः, तत्तत्पदार्थविशिष्टे कार्ये वाक्यानां तात्पर्यमिति प्राभाकराः। ततः किं? तत्राह—

---

१—एषामिदमाकूतम्—अगृहीतशक्तिकाच्छब्दादर्थप्रतीत्यनुदयाच्छक्तिज्ञानस्यापेक्षायां सत्स्वपि व्याकरणादिषु तद्ग्राहकेषु प्रवृत्तिनिवृत्तिरूपव्यवहारादेव साधारण्येन जगति सर्वेषां शक्तिग्रहाद् व्यवहार एव तद्ग्राहकशिरोमणिरिति स्थितौ चैत्र गामानयाश्वं बधानेत्याद्याकारोत्तमवृद्धप्रयुक्तप्रवर्त्तकादिवाक्यात् प्रयोज्ये तथा कुर्वतीदमीयचेष्टया प्रयोजकवाक्यस्य तादृशार्थबोधकतामनुमाय व्युत्पित्सुः परस्ताद् गां नयाश्वमानयेत्यादिप्रयोजकवाक्यात्तदनुसारिकार्य्यदर्शनादन्वयव्यतिरेकाभ्यां मिथोऽन्वितयोरेव क्रियाकारकपदार्थयोः शक्तिं निश्चिन्वान उपजीव्यतयाऽवगतपरान्वयाशमपरिहरन्नेव गवादिपदम्, आनयनात्मककार्य्यान्वितगवाद्यर्थवाचकम्, असत्यनुपपत्तिप्रतिसंधाने तथाविधकार्य्यान्वितगवादिबोधतात्पर्य्यनिबन्धनप्रयोजकोच्चरितत्वादित्याद्यन्वयव्यतिरेकानुमानतः कार्य्यान्वितार्थं एव पदानां शक्तिमवधारयति, ततोऽवधारितशक्तिकनानापदघटितवाक्यतोऽपि कार्य्ये एव तात्पर्य्यमध्यवस्यतीति।

ततश्चेति । स्वार्थे लिङ्वाच्ये कार्य्ये, उपनिषदामित्यस्योपरि कार्य्यप्रतीतेरिति शेषः, तासां मन्त्रार्थवादोपनिषदां, तत्र मन्त्राणां प्रयोगसमवेतार्थस्मारकतया; अर्थवादानां प्राशस्त्यसमर्पकतया: उपयोगित्वं कर्मसु, उपनिषदां तूक्तप्रकारद्वयाभावादध्ययनविध्युपात्तत्वेनानर्थक्यानुपपत्तेर्ज्ञेयार्थत्वं; न तु प्रामाण्यं कार्य्यार्थत्वाभावादिति भावः । एवं च सति नाममाहात्म्यप्रतिपादकवाक्यानां पौराणानां प्रत्यक्षवैदिकविधिमूलत्वाभावान्मन्त्रादिमूलत्वात्तदप्रामाण्ये सुतरामप्रामाण्यमित्याह—इतिहासेति । नाममाहात्म्यप्रतिपादकयोरिति शेषः । तन्मूलत्वादिति । मन्त्रादिमूलत्वादित्यर्थः । अतश्च सकलपुराणवचनप्रामाण्यादोषोऽयमिति न भ्रमितव्यं, प्रत्यक्षविधिमूलकानामग्निहोत्रादिबोधकपुराणवाक्यानां—प्रामाण्यसंभवाद् नाममाहात्म्यप्रतिपादकानि पुराणवचनान्युदाहृत्य विचार्यन्त इत्युपक्रमविरोधाच्चेति ।

अन्ये तु मन्यन्ते, न कार्य्ये एवार्थे वेदस्य प्रामाण्यमपि तु सिद्धेऽपि तत्रापि शक्तितात्पर्य्ययोराचार्य्यैरेव निरूपितत्वाद्, मन्त्रार्थवादयोस्तु मानान्तरानधिगतं तद्विरुद्धमर्थमवगमयतोरन्यपरत्वेऽपि स्वार्थे प्रामाण्यं भवत्येव, तात्पर्य्यं हि न प्रमितिमुत्पादयति किन्तु केवलं तत्र प्रतिबन्धं निरुन्धे तद्यदि स्वरसत एवं निष्प्रतिबन्धमवधारितरूपमनधिगतविषयञ्च विज्ञानमुत्पद्यते शब्दात् तदाऽन्तरेणापि तात्पर्य्यं तस्य प्रामाण्यं किं न स्यात् तत्संगानविगानयोः पुनरनुवादत्वगुणवादत्वे, उपनिषदां पुनरनन्यशेषत्वादपास्तसमस्तानर्थमनन्तानन्दानुभवैकरसमनधिगतात्मतत्त्वमवगमयन्तीनां प्रमाणान्तरविरोधेऽपि तस्यैवाभासीकरणेन च स्वार्थ एव प्रामाण्यं भवत्येव,

तदुक्तं भट्टपादैः

"अथ चेतिहासपुराणप्रामाण्यात् सृष्टिप्रलयावपीष्येते" इति ।

तथाऽपि देवतातत्त्वतत्पराणां पुराणानामनुष्ठेयार्थपराणां स्मृतीनां च स्वे स्वे गोचरे गरीयस्त्वाद् गुरुतरप्रायश्चित्तविधायिमन्त्रादिवाक्यविरोधे दुस्तरदुरितक्षयोद्देशेन नामसंकीर्त्तनमात्रं विधातुमशक्नुवन्ति पुराणवचनानि भजनीयदेवतास्तावकत्वमेवाश्रयन्ते यस्याः सकृत्कीर्त्तनमप्येतादृक् सा पुनरामायणमुपासिता किं न करोतीति तस्मादविवक्षितार्थत्वमेवैषामिति।

अत्राभिधीयते—यथा कार्य्ये सिद्धे च वेदस्य प्रामाण्यमविशिष्टं तथा पुराणानामपि, सर्व्वेषु पुराणेषु वर्णाश्रमधर्माणां प्रबन्धेन प्रतिपादनात्,

श्रीमद्भागवते तावद्—
धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्म्मत्सराणां सतां—
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्॥
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणा—
दिति पुराणस्य त्रिकाण्डरूपत्वप्रतिपादनात्,

श्रीमहाभारते च
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ!॥
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिदिति
धर्म्मब्रह्मणोरविशेषेण प्रतिपाद्यत्वप्रतिज्ञानात् प्रतिपादनाच,

भविष्योत्तरमत्स्यपुराणादिषु च धर्म्मप्रतिपादनसौभाग्यस्यैव भूयस्त्वाच्च नातिशङ्कनीयमेव धर्म्मे प्रामाण्यं पुराणानां. तत्र यथा काण्डभेदेन नानार्थत्वमविरुद्धं वेदानां, तथा पुराणानामपि भविष्यति।

अथ पुष्कराक्षसिद्धान्ततात्पर्यालोचनया वेदा अध्यात्मविषया एव

अध्यात्मविषया वेदास्त्रिकाण्डविषया इमे ।
परोक्षवादा ऋषयः परोक्षं च मम प्रियम् ॥
परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथे-

त्यादिशास्त्रपर्यालोचनया च त्रिकाण्डस्यैकवाक्यत्वं वेदेषु; एवं पुराणेष्वपि, ततश्च यस्माद्वाक्याद्योऽर्थः स्वरसतोऽवगम्यते सिद्धः कार्यो वा तत्र तत्प्रमाणमेव पुराणवचनमिति ।

वेदान्ति[1]मतानुसारेण पूर्वपक्षं दर्शयन् गुरुमतं निराकरोति—अन्ये त्विति। कार्य एव प्रामाण्यं विधिवाक्यस्यैव च प्रामाण्यमिति द्वैधावधारणं गुरुमते, तत्र प्रथमं दूषयति—न कार्य एवेति। पुत्रस्ते जात इत्यादिवाक्यश्रवणसमनन्तरं श्रोतुर्मुखविकासादिना हर्षमनुमाय तेन च तज्जनकं ज्ञानमनुमाय तत्र चोक्तवाक्यस्यान्वयव्यतिरेकाभ्यां कारणत्वं निर्णीय स्वदृष्टतनयजन्मैवानेन वाक्येन प्रतिपाद्यत इति व्युत्पित्सुः सिद्धेऽपि तात्पर्यमवधारयति, पुत्रस्ते देशान्तरादागत इत्यादिवाक्यान्तरपर्यालोचनयाऽऽवापोद्वापाभ्यां पुत्रपदस्य शक्तिं चावधारयति, तदेवं सिद्धेऽपि शक्तितात्पर्यग्रहः संभवतीति। द्वितीयमवधारणं दूषयति—मन्त्रेति। "वायुर्वै क्षेपिष्ठा देवता" इत्यादिवाक्यानां प्रामाण्यं निवारयितुं मानान्तरानधिगतमित्युक्तं, "धूम एवाग्नेर्दिवा ददृशे नार्चिः" इत्यादिवाक्यानां प्रामाण्यं निवारयितुं तदविरुद्धमित्युक्तम् अन्यपरत्वेऽपि विधिपरत्वेऽपीत्यर्थः। अत्रोदाहरणं "वज्रहस्तः

---

१—औपनिषदम्मन्यानास्तु तावदद्वैतविशिष्टाद्वैतशुद्धाद्वैतद्वैताद्वैतद्वैतसिद्धान्तवादिनः पञ्चापि गुरुमतं गुरुत्वेनैवावधारयन्तो गुरुमतीयकार्यपरत्वजीवातुभूतोपजीव्यविरोधमतिविशेषदर्शिमहादतिविशेषान्तरदान्दोधस्यानुमापकतया दुर्निवारमुपदर्शयन्तोऽन्विताभिधानादिगुरुप्रक्रियामनुपपद्यमानाः सिद्धवाक्यतोऽपि शाब्दबोधमभिमन्यन्तीति भावः।

पुरंदर" इत्यादिवाक्यानि। ननु विधिपरयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावे कथं प्रमितिजनकत्वं तात्पर्यस्य निर्णीतस्य प्रमितिजनकत्वा—त्त्राह—तात्पर्यं हीति। कल्पनागौरवान्मा नाभाच्चेति भावः। तत्प्रतिबन्धं प्रमितिप्रतिबन्धं निरुन्धे निवर्त्तयति, यथैकमेवाद्वितीयमित्यादिवाक्येष्वस्मिन्ग्रामेऽयमेक एवाद्वितीयः पुरुष इत्यादिवदुपचरितार्थत्वशङ्कयाऽद्वैतप्रमाप्रतिबन्ध उपक्रमादिलिङ्गैस्तात्पर्यनिर्णये तन्निवृत्तिः, एवं च यत्र प्रतिबन्धकानवतारो विषयश्चासंदिग्धः प्रमाणान्तरानधिगतश्च प्रमाणान्तराविरुद्धश्च यथा पुरन्दरस्य वज्रहस्तत्वादि तत्र प्रामाण्यं मन्त्रार्थवादयोः स्यादेवेत्याह–तद्यदीति। चशब्दात्प्रमाणान्तराविरुद्धविषयं,—तत् तर्हि, तात्पर्यमिति। निर्णीतमिति शेषः। तस्य शब्दस्य। वायुर्वै क्षेपिष्ठेत्यादीनां, धूम एवेत्यादीनां वाक्यानां गतिमाह—तत्संगानेति। तस्य विषयस्य, संगानं प्रमाणान्तरसंवादः, विगानं तद्विसंवादः क्रमेणोत्तरेणान्वयो, गुणवादत्वम् औपचारिकत्वं, ततश्च वायुर्वै क्षेपिष्ठेत्यादीनां प्रमाणान्तरसंवादादनुवादत्वं, धूम एवेत्यादीनां प्रमाणान्तरविसंवादादौपचारिकत्वं, वज्रहस्तः पुरन्दर इत्यादीनां प्रमाणान्तर संवादविसंवादाभावात्प्रामाण्यस्य च स्वतस्त्वात्स्वार्थे प्रामाण्यमेव युक्तम्। उपनिषदां गतिमाह–उपनिषदामिति। अनन्यशेषत्वादिति मन्त्रार्थवादवैलक्षण्यं, मन्त्रादीनां विधिशेषत्वात्, आत्मतत्त्वमवगमयन्तीनामिति विधिवैलक्षण्यम्, अनुवादत्वपरिहारायाह–अनधिगतमिति। अपुरुषार्थत्वपरिहाराय–अपास्तेति। दुःखाभावमात्रं परिहरति–अनन्तानन्देति। ननु द्वैतावभासिप्रमाणान्तरविरोधादप्रामाण्यं स्यान्नेत्याह–प्रमाणान्तरेति। तस्यैवेति। प्रमाणान्तरस्यैवेत्यर्थः। उपक्रमोपसंहारादितात्पर्यलिङ्गोपेतत्वादुपनिषदामिति भावः। पुराणानां गतिमाह–तन्मूलत्वादिति। मन्त्रार्थवादोपनिषन्मूलत्वादित्यर्थः। स्वार्थे सिद्ध इति शेषः। विधौ विवादाभावात्, तत्रैव सिद्धार्थे प्रामाण्ये भट्टाचार्यसंमतिमाह–उक्तं चेति। न चैवं नाममाहात्म्यप्रतिपादकानां पुराणवाक्यानामपि प्रामाण्यं स्यान्नेत्याह–तथाऽपीति। यद्यपि मन्त्रादीनां प्रामाण्यं तथाऽपीत्यर्थः। पुराणवचनानि भजनाय देवतास्तावकत्वमेवाथयन्त इति संबन्धः। अशेषपापक्षयफलकनामकीर्तनविधिपरत्वं किन्न स्यादत आह–दुस्तरेति। दुरितं ब्रह्महत्याऽऽदि, मात्रशब्देनाल्पत्वं द्योत्यते। प्रतिज्ञातेऽर्थे हेतुमाह—मन्वादिवाक्यविरोध इति। विरोधं सूचयति-गुरुतरेति। यदि नामकीर्तन-

मात्रेण ब्रह्महत्याऽऽदिपापक्षयः तर्हि द्वादशाब्दादिप्रायश्चित्तवैयर्थ्यं स्यात् दिति विरोध इति भावः। ननु विपरीतं किन्न स्यात् तथा हि मन्वादिवाक्यविरोधे नामकीर्तनवाक्यानामर्थवादत्वमाश्रीयते नामकीर्तनवाक्यविरोधे मन्वादिवाक्यानामेव ब्रह्महत्याऽऽदिनिषेधार्थवादत्वमाश्रीयतामिति शङ्कां निराकरोति-देवतेति। देवतास्वरूपपराणां पुराणानां स्वविषये गरीयस्त्वाद् अनुष्ठेयार्थपराणां च स्मृतीनां स्वविषये गरीयस्त्वाद्, मन्वादिवाक्यविरोधे पुराणवचनानि स्तावकत्वमेवाश्रयन्त इति योजना, पुराणानां देवतास्वरूपपरत्वं स्मृतीनामनुष्ठेयार्थपरत्वं चोपक्रमोपसंहारादितात्पर्यलिङ्गैर्द्रष्टव्यम्। गरीयस्त्वादिति। दृढतरप्रमाणोपेतत्वादित्यर्थः, अतश्च नामकीर्तनवाक्यानां विष्णुरूपदेवतास्तावकत्वं मन्वादिवाक्यानां प्रायश्चित्तविधायकत्वमेव युक्तमिति भावः। ननु किं देवतास्तुत्या? अतआह-भजनीयेति। भजनमुपासना, ततश्चोपासनाविधिशेषत्वं नामकीर्तनवाक्यानामिति भावः। अत एवाह-यस्यादिति। आप्रायणमामरणम् अतश्च मरणपर्यन्तमुपासनाऽनुष्ठानं विधेयं, ततश्च नामकीर्तनवाक्यानामविवक्षितार्थत्वमित्युपसंहरति-तस्मादिति। नामकीर्तनवाक्यानां स्वार्थे प्रामाण्यं वक्तुं प्रथमतः पुराणवाक्यानां प्रामाण्यं दर्शयति-यथेति। विधिवाक्यानां कार्ये; उपनिषदादीनां सिद्धे परमात्मनि तथा पुराणानामपि प्रामाण्यमविशिष्टमित्यनुषङ्गः, धर्माणां परमात्मनश्चेति शेषः। प्रबन्धेन विस्तरेण, तदेव विवृणोति-श्रीभागवत इति। पञ्चम्यन्तानां नातिशङ्कनीयं धर्मे प्रामाण्यं पुराणानामित्युत्तरेणान्वयः। प्रथमतः श्रीभागवतग्रहणं पुराणेषु श्रेष्ठत्वात् श्रेष्ठत्वे च प्रमाणमयमेव श्लोकः तथा हि अत्र भागवते परमो धर्मो निरूप्यते, धर्मस्य परमत्वमेवाह-प्रोज्झितं कैतवं कपटं स्वर्गापवर्गलक्षणं फलाभिसंधिरूपं यत्रेति, ततश्च काम्यधर्मप्रधानेभ्यः परमेश्वराराधनाख्यधर्मप्रधानं श्रीभागवतं श्रेष्ठमिति भावः, निर्मत्सराणां सतामिति तस्यैव धर्मस्याधिकारिपर्यालोचनया परत्वमुक्तं न केवलं तादृशधर्ममात्रनिरूपकत्वं किं तु वास्तवं वस्तु परमात्मरूपमत्र वेद्यं कीदृशं वस्तु शिवदं सुखदम् आध्यात्मिकाधिभौतिकाधिदैविकतापत्रयनिवर्तकं चाराधितं सदिति भावः, ततश्च फलाभिसंधिशून्यमपि परमेश्वराराधनं परिपक्वं सकलफलप्रदमिति सूचितम्, अनेन तादृशवस्तुनिरूपकत्वादपि पुराणान्तरेभ्यः श्रेष्ठत्वं श्रीभागवतस्योक्तं, यद्यपि पुराणान्तरेष्वपि तादृशं वस्तु निरूप्यते तथाऽप्यत्र यथा

प्राधान्येन निरूप्यते तथा नान्येषु धर्मार्थकामप्रधानेष्विति भावः। प्रकारान्तरेण श्रेष्ठत्वमाह—किं वा परैरिति। परैः पुराणैः श्रुतैः सद्भिरीश्वरो हृदि सद्यः किं वाऽवरुध्यते नावरुध्यत इत्यर्थः। अत्र शुश्रूषुभिः श्रवणेच्छावद्भिस्तत्क्षणादवरुध्यते कृतिभिरिति श्रवणेच्छाऽपि श्रीभागवतस्य पुण्यवतां भवति न सर्वेषामिति सूचितम्, अवरुध्यत इति वर्तमानत्वनिर्देशेन भागवतश्रवणे हृदि परमेश्वरावरोधनं कृतिनामनुभवसिद्धमिति सूचितम्, पुराणस्य श्रीभागवतस्य, त्रिकाण्डेति। कर्मकाण्डज्ञानकाण्डदेवताकाण्डरूपत्वप्रतिपादनादित्यर्थः। तत्र प्रथमपादे कर्मकाण्डरूपत्वं, द्वितीयपादे वास्तवपरब्रह्मनिरूपकतया ज्ञानकाण्डरूपत्वं, किं वा परैरित्यादिना देवताकाण्डरूपत्वं प्रतिपाद्यत इति। भूयस्त्वादिति। परमात्मप्रतिपादनमपि तत्राल्पं वर्तत इति भावः। नातिशङ्कनीयमिति। संशयविपर्ययौ न मन्तव्यावित्यर्थः। धर्म इति। परमात्मन्यपीति शेषः। न चैवं नानाऽर्थत्वं दोषायेत्याह—तत्रेति। वेदान्त्येकदेशिनस्तु सर्वो वेदः परमात्मपर एव, न च यागस्वर्गयोर्हिंसानरकयोश्च साध्यसाधनभावासिद्धिप्रसङ्गोऽन्यपरत्वादिति वाच्यम्, अन्यपरेभ्योऽपि वज्रहस्तःपुरन्दर इत्यादिभ्यो देवताविग्रहसिद्धिवत्तदुपपत्तेरिति वदन्ति, तत्पक्षावलम्बनेन पुराणवचनानामपि परमात्मपरत्वमेव, नामकीर्तनवाक्यानां तु स्वार्थपरत्वाभावेऽपि यजेत स्वर्गकाम इत्यादिवत्स्वार्थे प्रामाण्यं स्यादेवेत्याशयेनाह—अथ पुष्करादेति। नन्वेवं सर्वस्य वेदस्यैकवाक्यत्वं स्यादित्याशङ्कामिष्टापत्त्या परिहरति—वेदा इति। त्रिकाण्डविषया वेदा ब्रह्मात्मविषयाः, कथमन्यविषयाणामन्यविषयत्वं तत्राह—परोक्षेति। गूढवादा इत्यर्थः। ऋषयो वेदाः, तदुक्तमृषिणेत्यादौ वैदिकप्रयोग ऋषिशब्दस्य वेदार्थत्वदर्शनात्, विषं भुङ्क्ष्वेत्यादिवाक्यवद् गूढवादत्वं वेदानामिति भावः। गूढवादं स्तौति—परोक्षमिति। ममेति परमेश्वरोक्तिः, अनुशासनं विधिनिषेधात्मा वेदोऽयं बालानामज्ञानां परोक्षवादः। ननु कर्माणि विधत्ते; सत्यं विधत्ते न तु तत्र तात्पर्यं किंतु कर्ममोक्षाय संसारनिवृत्तये, यथा बालानामगदंभेषजं रोगनिवृत्तये न तु तदनन्तरं पित्रा दीयमानगुडावाप्तये, अतः परमात्मपर एव वेद इति सर्वे वेदा यत्पदमामनन्ति सर्वैश्च वेदैरहमेव वेद्य इत्यादिशब्दार्थः। समतेनोपसंहरति—ततश्चेति। स्वरसतइति। पूर्वमतेऽस्वरसप्रदर्शनम्। उदाहृतवाक्यानि तु साक्षात्परम्परया परमा-

त्मविद्यायां शेषभूतः सर्वो वेद इत्येवं व्याख्येयानि, सिद्धः परमात्मादिरूपः कार्यस्तदुपासनानामकीर्तनादिरूपः।

ननु भवतु च धर्मेऽपि तात्पर्यं पुराणानां; नामकीर्त्तनविषयाणां पुनः पौराणार्थवादानां स्मार्त्तप्रायश्चित्तविधिविरोधे प्रामाण्यन्न युज्यते ?

इयमविदितमीमांसावृत्तान्तानां विभीषिका, तथा हि किमिदमर्थवादत्वम्; अविधित्वं, विधिशेषत्वं, वाऽतत्परत्वं वा ? यदि तावदविधित्वं तत् किं लिङादिप्रत्ययविरहात् तद्वाच्यविरहाद् वा, न तावल्लिङादिप्रत्ययविरहात् "पूषा प्रपिष्टभागो यदाग्नेयोऽष्टाकपालो भवती" त्यादीनामप्यविधित्वप्रसङ्गात्। ननु तत्र लिङादिप्रत्ययविरहेऽपि तद्वाच्यमस्ति कालत्रयानवच्छिन्नेन द्रव्यदेवतासम्बन्धेन यागविधिपरिकल्पनाद्, इह तु न तदस्तीत्यविधित्वं, तदयुक्तम्, इहापि

"प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परमि–"

त्यादौ कालत्रयानवच्छिन्नेन साध्यसाधनसम्बन्धेन विधेः कल्पनात्।

अथ "हरिरित्यवशेनाह पुमान्नार्हति यातनामि"

त्यादौ वर्त्तमानापदेशादविधित्वं ? तर्हि "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" "अग्निहोत्रं जुहोती"त्यादीनामप्यविधित्वप्रसङ्गः। अथ तत्रापूर्वत्वाल्लकारपरिणामेन पञ्चमलकाराश्रयणेन वा विधित्वम्, इहापि तथैव भविष्यति।

ननु मन्वादिवाक्यविरोधे नामकीर्तनवाक्यानामर्थवादत्वमेव युक्तमिति पूर्वोक्तं स्मारयति—नन्विति। दूषयति—इयमिति। अविधित्वमविधायकत्वम्, अतत्परत्वमविधिपरत्वम्। तद्वाच्येति। लिङ्वाच्य-

शाब्दभावनाऽऽत्मकविधिविरहात्कार्यविरहादिति वाऽर्थः। अविधित्वप्रसङ्गादिति। अविधायकत्वप्रसङ्गादित्यर्थः। द्वितीयपक्षावलम्बनेन वैषम्यं शङ्कते—नन्विति। तत्र पूषादिवाक्येष्वित्यर्थः। तद्वाच्यमिति। शाब्दी भावना कार्यं वा, कथं गम्यतेऽत आह—कालत्रयेति। भूतभविष्यद्वर्तमानकालत्रयसंबन्धे हि विधिर्न घटतेऽत उक्तं—कालत्रयानवच्छिन्नेनेति। विधिकल्पनादिति। शाब्दभावनायाः कार्यस्य वा कल्पनादित्यर्थः। इह त्विति। नामकीर्तनवाक्येष्वित्यर्थः। तदिति। लिङ्वाच्यमित्यर्थः। इतिशब्दो हेतौ। अविधित्वम् = अविधायकत्वम्। साम्येन समाधत्ते—तदयुक्तमिति। विष्णुपुराणे "कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते" इति श्लोकस्य पूर्वार्धम्, अत्र श्लोके हरिस्मरणपापक्षययोः साध्यसाधनसंबन्धः प्रतीयते तेन च कालत्रयानवच्छिन्नेन विधिः कल्प्यते पापक्षयकामो हरिस्मरणं कुर्यादिति। वर्तमानापदेशाद् विधायकत्वं विष्णुनामकीर्तनवाक्यानामिति तृतीयं पक्षं शङ्कते—अथेति। प्रतिबन्द्या परिहरति—तर्हीति। अपूर्वत्वादिति। ब्रह्महत्यातरणाश्वमेधयोः साध्यसाधनसंबन्धस्य लोकानधिगतत्वादित्यर्थः। लकारविपरिणामो लटो लिङ्त्वकल्पनं यजेतेति, इहापि हरिनामोच्चारणपापनिर्हरणयोः साध्यसाधनसंबन्धस्यापूर्वत्वाद्विधित्वं भविष्यतीत्याह—इहापीति।

अथ विधिशेषत्वं; कोऽसौ विधिर्यच्छेषत्वमेषां, किं नामकीर्त्तनविषयोऽन्यो वा? न तावदन्यः, अन्यस्य विधेरसन्निधानाद् नामसंकीर्त्तनस्यैव स्वातन्त्र्येणोपसंहाराच, अथ नामकीर्त्तनविषय एव; तर्हि तस्य नियोज्यविशेषणान्तराश्रवणादन्यस्य कथंभावे वा श्रवणादार्थवादिकं पापनिर्हरणमेव नियोज्यविशेषणत्वेन सम्बध्यते रात्रिसत्रन्यायेन; ततश्च कार्यान्वयान्न विधिशेषत्वं, प्रतिपत्तिमात्रान्वयिनो हि विधिशेषाः। ननु प्रदेशान्तरस्थितमपि नामसंकीर्त्तनं प्रदेशान्तरस्थस्यापि "विष्णुरुपांशु यष्टव्योऽजामित्वाये"त्यादेः क्रतुविधेरङ्गमुपासनाविधेर्वा; तदव्यभिचारिविष्णवाख्यदेवतासम्बन्धमुखेन पर्णमयीत्व-

वत् । ततश्च "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"त्यादिफलश्रुतेरिव पापक्षयफलश्रुतेरप्यर्थवादत्वं परार्थत्वात्, तदयुक्तं; परार्थत्वासिद्धेः,

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवमिति,

ध्यानयज्ञार्चनकार्य्ये युगभेदेन कीर्त्तनस्य व्यवस्थापितत्वात् । नन्वस्यार्थवादत्वात् कथं तद्बलेन पर्णमयीन्यायप्रतिक्षेपः? उच्यते—फलांशस्तावदास्तां ध्यानयज्ञार्चनानां युगभेदेन व्यवस्थया श्रेयोहेतुत्वानुवाद एवार्थवादत्वे नावकल्पते, स्तुतावनुपयोगात् स्तुतिर्हि न देशकालव्यवस्थामवलम्बते, अपि स्वदेशकालेऽपि स्तुत्यर्थस्य पुरुषार्थत्वम् ।

ननु न कीर्त्तनमिह स्तूयते, अपि तु कलिः, युगान्तरेषु महता प्रयासेन यत्साध्यते तत्कलावल्पेनेति, एवमपि कृतादिषु ध्यानादीनां व्यवस्था नोच्यते किं तु यत् कृतादिषु ध्यानयज्ञार्चनैराप्नोति तत्कलौ कीर्त्तनैर्नैवेति वक्तव्यं, न च तथोच्यते, उत्तरोत्तरयुगोत्कर्षमुखेन प्रतिपादने कलेः सर्वोत्कर्षविवक्षायां चिरस्य व्यापारः प्रसज्जेत, तस्माच्च स्तुतिपरमिदम् अपि तु फलपरमिति । ननु व्यवस्थावाक्यं तावदास्ताम् इतरेषां पुनः पर्णमयीन्यायेनार्थवादत्वं भविष्यति, ततश्च व्यवस्थावाक्यस्यापि कीर्त्तनविषयत्वादर्थवादत्वमेव भविष्यति,

मैवं, सिद्धे व्यवस्थावाक्यस्यार्थवादत्वे पर्णमयीन्यायावतारः; अवतीर्णे पर्णमयीन्याये च तेषामर्थवादत्वम्; अर्थवादत्वे च तेषां व्यवस्थावाक्यस्य नार्थवादत्वमिति

चक्रकप्रसङ्गाद्, अपि च वैष्णवेषु यागेषु विष्णोः स्वरूपेण न देवतात्वम् अपि तु विष्णुशब्दानुविद्धतया तत्संजल्पितस्यैव तस्य तत्रोद्देश्यतया विधानाद् अतएव हि तेनैव शब्देनोद्देशो न शब्दान्तरेण "विष्णवे शिपिविष्टाय शृते चरुमि"त्यादौ देवताभेदोऽपि; कीर्त्तने तु न विष्णुशब्दानुविद्धस्यैव तस्य विषयत्वं नामान्तराणामपि तत्र विनियोगात् ततश्च

वैकुण्ठनामग्रहणमशेषाघहरं विदुरि—

त्यादेः पदार्थसम्बन्धमुखेनापि क्रतौ नानुप्रवेशः, अतो न स्तुतिपरत्वं फलश्रुतेरिति, अपि च संभवान फलपरत्वे न स्तुतिपरत्वं युक्तं, गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात्। पर्णमयीवाक्ये हि पर्णमयीत्वस्य द्रव्यस्य क्रियामनाश्रित्य फलसाधनत्वानुपपत्तेः प्रदेशान्तरवर्त्तिनीं च क्रियामप्राप्तामाश्रित्य विधानायोगात् क्रियासम्बन्धे फलसम्बन्धे च विधेये वाक्यभेदप्रसङ्गात् क्रतुविधिशेषत्वमेव विधीयते, ततश्च फलश्रुतेरर्थवादत्वम्, इह पुनः संकीर्त्तनस्य क्रियात्वात् तस्याश्च स्वतः फलसाधनत्वोपपत्तेः फलार्थमेव विधानं "पृथग्घ्य: प्रतिबन्धः फलमि" ति न्यायेन; तस्मान्नथाऽर्थवादा एताः फलश्रुतयो न गुणवादाइति।

मौलिकं द्वितीयं शङ्कते—अथेति। दूषयति—कोऽसाविति। एषां—नामकीर्तनवाक्यानां, कोऽसावित्युक्तं विवृणोति—किमिति। उपस्थितत्वादादौ द्वितीयं दूषयति—न तावदिति। स्वातन्त्र्येणेति। अन्यविधिनिरपेक्षत्वेनेत्यर्थः। आद्यं शङ्कते—अथेति। विधिरिति शेषः। तस्येति। नामकीर्तनविषयस्य विधेर्नियोगापरपर्य्यायस्यास्ति नियोज्याकाङ्क्षा तत्र स्वर्गकामो यजेतेत्यादौ यथा स्वर्गकामना नियोज्यविशेषणं श्रूयते न तथाऽत्र किंचिच्छ्रूयते नियोज्यविशेषणं येन

तद्वान्नियोज्यः स्याद् अतोऽर्थवादोपस्थितं पापनिर्हरणमेव नियोज्यविशेषणत्वेन संबध्यते, ततश्च पापनिर्हरणकामो नियोज्यः कल्पनीय इति भावः। ननु प्रयाजादिविधिवन्निर्नियोज्यत्वमेवास्तु; अन्यथा तत्रापि वर्म भ्रातृव्याभिभूत्यै इत्यर्थवादोपस्थितो भ्रातृव्याभिभूतिकामो नियोज्यः कल्प्येत तत्राह—अन्यस्येति । कथम्भावोऽङ्गत्वं प्रयाजादिविधेर्दर्शपूर्णमासाङ्गत्वेन श्रवणात्तन्नियोज्येनैव नियोज्यवत्त्वाच्च स्वतन्त्रो नियोज्यः कल्प्यते; नामकीर्तनविधेस्त्वन्याङ्गत्वेनाश्रवणादार्थवादिकपापनिर्हरणकाम एव नियोज्यः कल्प्यत इति भावः, एतत्प्राभाकरमतेन। भट्टमते तु नामकीर्तनविधेः फलाकाङ्क्षायामार्थवादिकं फलं पापक्षयरूपं कल्प्यत इति ज्ञातव्यम् । रात्रिसत्त्रेति। "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ती"ति रात्रिसत्त्रविधेर्मतभेदेन फलाकाङ्क्षायां नियोज्याकाङ्क्षायां वा न स्वर्गः फलं न स्वर्गकामो वा नियोज्यः उपस्थापकाभावाद्, "विश्वजिता यजेते"त्यादावगत्या तदाश्रयणं, ततः प्रतितिष्ठन्तीत्यर्थवादोपस्थिता प्रतिष्ठा फलं, तत्कामो वा नियोज्यः कल्प्यत इति चतुर्थे निर्णीतम्। फलितमाह–ततश्चेति। कार्यान्वयाद् विधिपरत्वादित्यर्थः, नामकीर्तनवाक्यानामिति शेषः। विधिपरत्वे विधिशेषत्वानुपपत्तिं स्पष्टयति–प्रतिपत्तीति। प्रतिपत्तिमात्रान्वयिनः प्राशस्त्यप्रतिपत्तिमात्रपरा इत्यर्थः। मात्रशब्देनानुष्ठेयार्थशून्यतोच्यते यथा वायुर्वै क्षेपिष्ठा देवतेत्याद्याः, नामकीर्तनवाक्यानां त्वनुष्ठेयार्थवत्त्वाद्विधिपरत्वमेव; न विधिशेषत्वमिति भावः। शान्तिपति नन्विति । नामकीर्तनं क्रतुविधेरङ्गमिति संबन्धः, कस्य क्रतुविधेरित्यपेक्षायामाह–विष्णुरिति । यद्यपि "विष्णुरुपांशु यष्टव्य" इति

---

१—पूर्वमीमांसादर्शने चतुर्थस्य तृतीयेऽष्टमाधिकरणे "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ती"ति विषयवाक्यमादाय रात्रिरूपक्रतुबोधकवाक्ये श्रूयमाणा प्रतिष्ठा फलम्, अर्थवादो वेति संशय्य; "क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः" ४।३।१५। इतिसूत्रेण जुह्वां पर्णताऽऽम्नाताङ्गबोधकवाक्य इवेहापि फलस्यार्थवादत्वमेवेति कार्ष्णाजिनिमतेन पूर्वपक्षयित्वा, "फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्याद्," ४।३।१६ इतिसूत्रेण फलत्वनिर्देशात् फलमेव प्रतिष्ठा विधावितेऽश्रुतोऽपि विधिरध्याहार्य इत्यात्रेयमतेन सिद्धान्तितम् ।

न विधिः, द्वितीयेऽध्यायेऽर्थवादत्वसमर्थनात्[1], तथाऽपि तद्वाक्यस्यादेरुपांशुयाजमन्तरा यजतीत्यस्येत्यर्थः। ननु प्रकरणाद्यभावे कथमङ्गत्वमित्याशङ्कायां वाक्यादङ्गत्वं वक्तुं प्रकरणाद्यभावमङ्गीकरोति-प्रदेशान्तरस्थितमिति। अपिशब्दाच्छ्रुत्याद्यभावाङ्गीकारः। पक्षान्तरमाह–उपासनाविधेरिति। विष्णूपासनाविधेर्वाऽङ्गं नामकीर्तनमित्यन्वयः। उभयत्र हेतुमाह–तदव्यभिचारीति। उपांशुयाजेन विष्णूपासनया वाऽव्यभिचारिणी विष्ण्वाख्या देवता तत्संबन्धमुखेन तदनुप्रवेशाद् उपांशुयाजे विष्णूपासनायां वाऽनुप्रवेशात्। पर्णेति। यथा पर्णमयीत्वमव्यभिचरितक्रतुसंबन्धिजुहूद्वारा क्रत्वङ्गं यस्य पर्णमयी जुहूर्भवतीतिवाक्यात् तथा नामकीर्तनमव्यभिचरितक्रतुसंबन्धिविष्णुदेवताद्वारा क्रत्वङ्गम्, अव्यभिचरितोपासनासंबन्धिविष्णुदेवताद्वारोपासनाऽङ्गं वा नामकीर्तनप्रतिपादकतत्तद्वाक्यादिति भावः। किं सर्वं नामकीर्तनवाक्यं पर्णतान्यायेन नामकीर्तनस्याङ्गत्वं बोधयेत् कतिपयं वा? नाद्यः ध्यायन्कृत इत्यादेरङ्गत्वबोधकत्वानुपपत्तेः ध्यानयज्ञार्चनसाध्ये फले संकीर्तनस्य युगभेदेन व्यवस्थापरत्वात्, उभयपरत्वे वाक्यभेदादित्याशयेनाह–परार्थत्वासिद्धेरिति। ननु यथा यस्य पर्णमयी जुहूरिति क्रत्वङ्गतया पर्णताविधानं, न स पापं श्लोकं शृणोतीत्यर्थवादः; तथा संकीर्त्य केशवमिति क्रत्वङ्गतयोपासनाङ्गतया वा नामकीर्तनविधानम्, इतरद्ध्यायन् कृत इत्याद्यर्थवादः, ततश्च नास्य व्यवस्थापरत्वं येन वाक्यभेदः स्यादिति शङ्कते–नन्विति। दूषयति–उच्यतइति। फलांश इति। ध्यायन् जपन् अर्चयन् यदाप्नोति तदाप्नोतीत्येवंरूपः फलांशस्तावदास्ताम्, अर्थवाद इति शेषः, न स पापं श्लोकं शृणोतीतिवत्सतत्त्वमर्थवादत्वस्य संभावितत्वादिति भावः। कृते ध्यायन् त्रेतायां यजन् द्वापरेऽर्चयन् इत्येवं युगभेदेन श्रेयोहेतुत्वव्यवस्थानवादस्तु नार्थवाद इत्याह–ध्यानेति। अर्थवादत्वइति सप्तम्यन्तं, तत्र हेतुमाह–स्तुतावनुपयोगाद्, अनुपयोगमेवाह–स्तुतिरिति। अव-

---

[1]—जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति, विषयवाक्यानि, अत्र विष्ण्वादिवाक्यानि विधायकानीति पूर्वपक्षे उपांशुयाजेत्यादिवाक्यं विधायकं, शिष्टान्यनुवाद इति राद्धान्तः।

लम्यते = आश्रयति, अस्मिन्नेव ग्रामेऽयं समीचीनोऽस्मिन्नेव काल इत्यादौ स्तुत्यपकर्षादिति भावः। अदेशकालेऽपीति। देशकालव्यवस्थाराहित्येऽपि स्तुत्यस्य पुरुषार्थपर्यवसन्नत्वमवलम्यते स्तुतिरित्यनुषङ्गः, ततश्चापूर्वत्वाद्व्यवस्था विधेयाऽस्मिन्वाक्ये पर्णतान्यायो नास्तीति भावः। न पर्णतान्यायो नापि व्यवस्थाविधानमिति तटस्थः शङ्कते–नन्विति–समाधत्ते–एवमिति। पर्णतान्यायाङ्गीकारे यथा व्यवस्थोक्तिर्न घटते एवं कलिस्तुतिपरत्वेऽपि सा न घटत इति तस्मादस्मिन्वाक्ये कृतादिषु ध्यानादीनां श्रेयोहेतुत्वव्यवस्थैव विधीयते न च तथोच्यत इति, यद्यपि तथैवोच्यते कृते ध्यायन् त्रेतायां यजन् द्वापरेऽर्चयन् यच्छ्रेयश्चाप्नोति तत्कलौ केशवं संकीर्त्येति एवकारः परं न श्रूयते, न च तावताऽस्ति क्षतिः सर्वथा कलिस्तुत्युपपत्तेः, तथाऽपि कलिस्तुतेरनुपयोगाद्युक्तव्यवस्थायाश्चापूर्वत्वाद् यदाप्नोतीति यच्छब्दस्य यदाग्नेयोऽष्टाकपालो भवतीतिवदुपपत्तेः, कृतादिषु ध्यानादीनां श्रेयोहेतुत्वव्यवस्थाविधिपरमेवेदं वाक्यमिति भावः। कृते ध्यायन्यच्छ्रेयश्चाप्नोति तत्त्रेतायां यजन्नाप्नोति, यत्त्रेतायां यजन्नाप्नोति तद्द्वापरेऽर्चयन्नाप्नोति, यद्द्वापरेऽर्चयन्नाप्नोति तत्कलौ संकीर्त्य केशवमाप्नोतीति पूर्वपूर्वयुगापेक्षयोत्तरोत्तरयुगस्याल्पप्रयासमसाध्यश्रेयोहेतुत्वप्रतिपादनेनोत्कर्षमुखेन सर्वोत्कर्षः कलियुगस्य प्रतिपाद्यत इत्याशङ्क्याह–उत्तरोत्तरेति। विरम्येति। सकृदुक्त्वा पुनरुक्तिर्विरम्य व्यापारः आवृत्तिरिति यावत्। फलपरमिति। श्रेयोहेतुत्वव्यवस्थाविधिपरमित्यर्थः। नन्वितरवाक्यानां पर्णतान्यायेन नामकीर्तनस्य क्रत्वङ्गत्वबोधकत्वं भविष्यतीति द्वितीयं कतिपयमिति पक्षं शङ्कते–नन्विति। इतरेषामिति। "हरिरित्यवशेनाह पुमान्नार्हति यातनाम्"इत्यादीनामित्यर्थः। पर्णमयीन्यायेनेति। यथा यस्य पर्णमयी जुहूरिति पर्णतायाः क्रत्वङ्गत्वेन विधिर्न स पापं श्लोकं शृणोति इत्यर्थवादस्तथा हरिरित्यवशेनाहेति नामकीर्तनस्य क्रत्वङ्गत्वेन विधिर्नार्हति यातनामित्यर्थवादः, एवमन्यत्रापि योज्यम्। नन्वितरवाक्येभ्यः क्रत्वङ्गत्वेऽपि नामकीर्तनस्य व्यवस्थावाक्यात्पुरुषार्थत्वमपि भविष्यति-तत्राह-ततश्चेति। व्यवस्थावाक्यमर्थवादः नामकीर्तनविषयत्वादितरवाक्यवदित्यनुमानात्तस्यार्थवादत्वे केवलक्रत्वर्थत्वमेव नामकीर्तनस्येति भावः। अपूर्वव्यवस्थाविधिपरत्वाद्व्यवस्थावाक्यस्य तद्विरोधे सामान्यतो दृष्टमनुमानमप्रमाणमित्याशयेनाह-मैवमिति। दूषणान्तरमाह-

सिद्ध इति। यद्यपीतरवाक्येषु पर्णतान्यायो न व्यवस्थावाक्यस्यार्थवादत्वमपेक्षते किं त्वव्यभिचरितक्रतुसंबन्धमात्रमपेक्षते तथाऽपि पुरुषार्थतापरिहारेण पर्णतान्यायो न व्यवस्थावाक्यस्यार्थवादत्वमपेक्षते ततश्च सिद्धे व्यवस्थावाक्यस्यार्थवादत्वे इतरवाक्येषु हरिरित्यवशेनाहेत्यादिषु पुरुषार्थतापरिहारेण पर्णतान्यायः, तस्मिंश्च सति नार्हति यातनामित्यादीनामर्थवादत्वं, ततश्च तत्सामान्याद्व्यवस्थावाक्यस्यार्थवादत्वमिति चक्रकम्^१। प्रकारान्तरेण पर्णतान्यायं दूषयति-वैष्णवेष्विति। विष्णुशब्दानुविद्धतयेति। विष्णुशब्दोपहिततयेत्यर्थः। तस्य विष्णोः, तत्र यागेषु, तत्संजल्पितस्यैव विष्णुशब्दसंजल्पितस्यैवोद्देश्यतया यागान्तर्गतोद्देशविषयतया विधानादित्यर्थः। तेनैव विष्णुशब्देनैवोद्देशः संकीर्तनं यागेषु न शब्दान्तरेणान्यथा दाशमिकन्यायविरोध इति भावः। विष्णव इति। श्रुते पक्रतुन्धे विष्णोरन्यो विष्णुः शिपिविष्ट इति देवताभेदो मीमांसकसंमतः सोऽप्यत एवेति संबन्धः अन्यथा शब्दान्तरप्रवेशेऽपि सैव देवता स्यात् तस्माच्छब्दोपहित एवार्थो देवता न स्वरूपेणेति भावः। अस्तु ततः किं तत्राह-कीर्त्तने त्विति। विष्णुशब्दोपहितस्यैवोपांशुयाजे देवतात्वं कीर्तनेऽपि विष्णुशब्दोपहित एव यदि विषयः स्यात्तया-

१—अयमभिप्रायः, "हरिरित्यवशेनाह पुमान्नार्हति यातनामित्यादिषु पर्णतान्यायावतारेणार्थवादत्वं तदाऽऽशङ्क्येत; यदि नामकीर्त्तनस्य क्रत्वङ्गत्वं निर्णीयेत, तत्तु न संभवि ध्यायन् कृत इत्यादिभिर्व्यवस्थाविधानेन पुरुषार्थताप्रतीतेर्नामकीर्त्तनस्य क्रत्वङ्गत्वप्रतिबन्धकत्वात्, तथा च पूर्वं,व्यवस्थावाक्यम्; अर्थवादः; नामकीर्त्तनविषयकत्वात्; इतरनामकीर्त्तनवाक्यवदित्यनुमानेन व्यवस्थावाक्यस्यार्थवादता वक्तव्या, ततो "हरिरित्यवशेनाह" त्यादौ पर्णतान्यायावतारः सुघटः,एवं चेतरवाक्येषु पर्णतान्यायः स्पष्टमेव व्यवस्थावाक्यस्यार्थवादत्वमपेक्षते, व्यवस्थावाक्यस्यार्थवादत्वेन नार्हतीत्यादीनामर्थवादत्वमपेक्ष्यतेऽनुमानप्रयोगे दृष्टान्तविधया"नार्हति यातनामि"त्यादिष्वर्थवादत्वं पर्णतानिदर्शनेनैव वाच्यमिति तत् पर्णतान्यायमपेक्षत,इति स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहविषयत्वरूपंचक्रकमनिवार्य्यमत्रेति।

२—पूर्वतन्त्रस्य दशमेऽध्याये चतुर्थपादे हि—विधिवाक्ये श्रूयमाणेन देवतावाचकपदेनैवानुष्ठाननियमासम्भवं पूर्वपक्षयित्वा, विधिशब्दस्य तु मन्त्रत्वे भावः स्यात्तेन चोदना, १०।४।२१। इति सूत्रेण विधिवाक्यघटकेनैव शब्देनानुष्ठाननियमः सिद्धान्तितः।

स्तदाऽव्यभिचरितक्रतुसंबन्धिदेवताद्वारा कीर्तनं पर्णतान्यायेन क्रत्वङ्ग-
न चैवमस्ति ततश्च हरिरित्यवशेनाहंत्यादौ हरिशब्देनाभिहितस्योपांशु-
याजदेवतात्वे मानाभावान्नाव्यभिचरितक्रतुसंबन्ध इति भावः। पर्णा-
र्थसंबन्धमुखेनेति। अव्यभिचरितक्रतुसंबन्धिपदार्थद्वारेत्यर्थः। पर्णम-
यीवाक्येऽपि फलपरत्वं किन्न स्यादत आह—पर्णेति। क्रियामनाश्रित्येति।
दध्नेन्द्रियकामस्येत्यादौ क्रियाश्रयस्यापि दध्न इन्द्रियफलसाधनत्वापत्ते-
रिति भावः। ननु तर्हि होमक्रियामाश्रित्य यथा दध्नः फलसाधनत्वं
विधीयते तथा पर्णत्वस्यापि क्रतुक्रियामाश्रित्यापापश्लोकश्रवणफलसा-
धनत्वं विधीयतां तत्राह—प्रदेशान्तरेति। प्रकरणप्राप्तायां हि क्रियायामा-
श्रयाश्रयिसंबन्धोऽनूद्यते फलसंबन्धो विधीयते दध्नेन्द्रियकामस्येत्यादौ,
न चात्र क्रतुक्रिया प्रकरणप्राप्ता प्रदेशान्तरपठितत्वादिति भावः। नन्वने-
नैव वाक्येनाश्रयाश्रयिसंबन्धो विधीयतां तत्राह—क्रियेति। पर्णमयीत्व-
स्येति शेषः। क्रियासंबन्धः क्रियया सहाश्रयाश्रयिसंबन्धः। विधीयत इति।
पर्णमयीवाक्य इति शेषः। फलश्रुतेर्न स पापमित्याद्यायाः नामकीर्तन-
वाक्येषु वैषम्यमाह इहेति। पृथग्ध्येति। उत्तरमीमांसायां तृतीय उद्गीथो-

१—उत्तरमीमांसायां तृतीयाध्याये तृतीयपादे कर्माङ्गावबद्धोपासना-
नियमराहित्याधिकरणे "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्।३।३।
४२" इति सूत्रे श्रीशङ्करभाष्ये "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादीनि कर्माङ्गा-
श्रितानि विज्ञानानि नित्यान्यनित्यानि वेति संदेहः; प्रयोगवचनपरिग्रहान्नि-
त्यानीति पूर्वपक्षयित्वा, तदुपासनानां तु निर्धारणोपासनानामनियमोऽनि-
त्यता सिद्धान्तिता; कुतः 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्येवंरूपया
छान्दोग्ये, तद्दृष्टेः = अनियमदर्शनात्, युक्तं चैतद् हि—यतः कर्माङ्गाश्रयोपासनाया
पृथक् फलमप्रतिबन्धः कर्मसमृद्धिः, तदेव वीर्यवत्तरं भवतीत्युपासनया पक्ष-
द्वयेऽपि [illegible] शंकराचार्यपादा अभिप्रयन्ति स्म। [illegible] श्रीभाष्ये
रामानुजाचार्यपादा अप्येवमेव व्याचख्युः। सुधार्थेऽनुभाष्ये तु प्रकृतसूत्रभावं
वल्लभाचार्यपादा [illegible]
[illegible]। [illegible] वेदान्तपारिजातसौरभभाष्येऽपि [illegible]
[illegible]। इति पूर्णप्रज्ञदर्शने श्रीगोविन्दभाष्ये च श्रीमदानन्दतीर्थभगव-
[illegible]
[illegible]
[illegible] सर्वत्र [illegible] पूर्वमीमांसायाम् [illegible] समानार्थानि।

पासनादीनां पर्णतान्यायेनाव्यभिचरितक्रतुसंबन्धयुद्गीथद्वारा क्रत्वङ्गत्वनियममाशङ्क्य सिद्धान्तितं "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलमि"ति तन्निर्धारणस्य क्रत्वङ्गत्वनिर्धारणस्यानियमोऽसत्त्वं तद्दृष्टेः अनियमदृष्टेः तेनोभौ कुरुतो यश्चैवं वेद यश्च न वेदेत्युपासनारहितक्रतुप्रयोगदर्शनादिति, किमर्थं तर्ह्युद्गीथोपासनादीनि विधीयन्त इत्याशङ्क्योक्तं पृथक् स्वतन्त्रम् अप्रतिबन्धः कर्मफलसमृद्धिः फलम् उद्गीथोपासनादीनां क्रियात्वात्स्वतन्त्रफले साधनत्वमुपपद्यत इति भावः ।

अथातत्परत्वं, तदपि स्वार्थपरत्वे बाधकभावात् साधकाभावाद्वा, न तावद्बाधकभावाद् अर्थान्तरपरत्वमेव हि तस्य बाधकं तदिह नास्तीत्यवोचाम, नापि साधकाभावाद् अध्ययनविधेरेव साधकत्वात् स हि प्रयोजनशून्यमक्षरमात्रमपि न ग्राहयति; अत एव क्वचिदेकत्र तात्पर्य्यमागृह्णाति, तत्रान्यपरत्वस्य पराकृतत्वात् स्वार्थपरत्वं परिशिष्यते. अपि च, उपक्रमोपसंहारयोरेकरूपत्वं पौनःपुन्यमनधिगतत्वमर्थवत्त्वमुपपत्तिः प्रशंसा चेति षड्विधानि तात्पर्य्यलिङ्गानि, तानि चाजामिलोपाख्यानादिषु स्पष्टमुपलभ्यन्ते व्याकरिष्यन्ते च यथाऽवसरं, तस्मान्नैवातत्परत्वं नामसंकीर्त्तनविषयाणां वचनानाम्, अतो यत्किंचिदेतदर्थवादरूपत्वमिति,

अपि च मानान्तरानधिगतं कृतियोग्यमिष्टसाधनमेव विधिः स च लिङादियुक्तेन वाक्येनावगम्यतां वाक्यान्तरेण वा कस्तत्राग्रहः । इहापि

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः—

रितिप्रमाणान्तरानधिगतं पापक्षयसाधनत्वमवगम्यते नामकीर्त्तनस्य, कृतियोग्यं च तत्क्रियात्वात् काल-

संस्पर्शानवगमाद् । ननु यन्न सहतएव कालसंसर्गं तस्का स्यैयथा यजेतेत्यादिना विहितं, पदान्तराभिहितं तु न तथा, नामकीर्त्तनमित्यादेरस्तीत्यादिना सामानाधिकरण्येऽप्यविरोधात्, तदयुक्तं, कृत्यानामविधित्वप्रसङ्गात्, ते हि कालसंबन्धेनावरुध्यन्ते कर्तव्यमस्तीत्यादिमयोगदर्शनात्, तस्मात् कालसंस्पर्शानवगमएव कार्य्यत्वोपयोगी न तदसहत्वं सर्व्वथा कालासंबन्धे शून्यत्वप्रसङ्गाद्, उक्तं च भाष्ये "भविष्यश्चैषोऽर्थ" इति, तस्माद् दुर्वार एव नामसंकीर्त्तनविषयो विधिः, भवतु वाऽर्थवादत्वमेषां, तद्बलादेव विधित्वमनुमिमीमहे, विधिं विना तस्यैवानुपपत्तेः विधिशेषो ह्यर्थवादः तत्र च विधावार्थवादिकमेव फलं भविष्यति, अपि च स्पष्टमुपलभ्यन्त— एव नामसंकीर्त्तनविषया विधयः,

तस्मादेकेन मनसा भगवान् सात्वतां पतिः ।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥

"गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः"
"संकीर्त्तयेज्जगन्नाथं" "गोविन्देति सदा वाच्यं"—
"नामानि तद्रतिकराणि पठेदलज्जः"
"हित्वा लज्जां कलिमलकुलच्छेदकानीरयेत्ना
निष्णोर्नामान्यनिशममृतमासिरेषा चतुर्थे"
त्येवंजातीयका बहवः ।

अविदितमीमांसावृत्तान्तस्येत्यादिग्रन्थोक्तं तृतीयपक्षमाशङ्कते-सर्पेति। नामकीर्तनवाक्यानामविधिपरत्वमित्यर्थः। दूषयति-तदपीति। भावः सत्यम् । अर्थान्तरेति। स्तुतिपरत्वं पर्णतावत् क्रत्वङ्गत्वपरत्वं वा पापक्षयफलोद्देशेन नामकीर्तनविधिपरत्वे बाधकं तत्तु नास्तीत्युक्तमित्यर्थः । अध्ययनविधेरिति । यदि त्वध्ययनविधिः पुराणानां भास्तीत्यु-

ध्येन तर्हि पुराणश्रवणविधेरिति ज्ञेयं साधकत्वमेव दर्शयति–स हीति । न ग्राहयतीति । अध्येतव्यत्वेन श्रोतव्यत्वेन वा न ग्राहयतीत्यर्थः । ततोऽध्ययनविधिः श्रवणविधिर्वा पुराणानां प्रयोजनशून्यमक्षरमात्रमपि न ग्राहयत्यत एव कस्मिंश्चिदेकस्मिन्फलवति तात्पर्यं तत्तत्पुराणवाक्यानामन्तरेण स्वीकरोतीत्याह–अतएवेति । ततः किं, तत्राह–सत्रेति । नामकीर्तनवाक्येष्वित्यर्थः । अन्यपरत्वस्येति । स्तुत्यादिपरत्वस्येत्यर्थः । स्वार्थेति । पापक्षयोद्देशेन नामकीर्तनविधिपरत्वमित्यर्थः । न केवलमध्ययनविधिरेव श्रवणविधिरेव वा नामकीर्तनवाक्यानां तात्पर्यग्राहकोऽपि तूपक्रमोपसंहारादीन्यपीत्याह–अपि चेति । पौनःपुन्यमभ्यासः, अनधिगतत्वमज्ञातत्वम् अर्थवत्त्वं फलवत्त्वं, प्रमाणान्तरानवगता कृतियोग्येष्टसाधनता लिङर्थ इति मतेऽप्याह–अपि चेति । साधनशब्दो भावप्रधानः । लिङादियुक्तेनेति । यजेत स्वर्गकाम इत्यादिनेत्यर्थः । वाक्यान्तरेणेति । पूषा प्रपिष्टभाग इत्यादिनेत्यर्थः । प्रकृत आह–इहापीति । कृतियोग्यं च तद्नामकीर्तनमित्यर्थः । क्रियात्वे हेतुः कालसंस्पर्शानवगमादिति । सर्वेषामप्यघवतामित्यादिवाक्ये भूतभविष्यद्वर्तमानकालसंसर्गो नावगम्यते ततो नामकीर्तनं क्रियेत्यभिप्रायः । ननु कालसंस्पर्शायोग्यत्वं क्रियात्वगमकं यथा यजेतेत्यादौ तत्प्रकृते नामव्याहरणं विष्णोरित्यादिवाक्ये नास्तीति शङ्कतेनन्विति । कार्यं क्रियेत्यर्थः । पदान्तरेति । सुबन्ताभिहितं तु न कालसंस्पर्शायोग्यमित्यर्थः । तत्र हेतुमाह–नामेति । एवं हि पूषा प्रपिष्टभाग इत्यादेरविधायकत्वप्रसङ्ग इत्याह–तदयुक्तमिति । तत्राप्यस्तीतिसामानाधिकरण्याविरोधादिति भावः । दूषणान्तरमाह–कृत्यानामिति । कृत्यप्रत्ययानामित्यर्थः । कालसंबन्ध इति सप्तम्यन्तम् । स्वार्थस्येति शेषः । तत्र हेतुः–कर्तव्यमिति । तस्माद्वाक्ये कालसंसर्गाप्रतीतिरेव क्रियात्वगमिकेत्युपसंहरति–तस्मादिति । कार्यत्वोपयोगी क्रियात्वगमकः, न तदसहत्वं न कालसंसर्गासहत्वं, कार्यत्वोपयोगीत्यनुषङ्गः । दूषणान्तरमाह–सर्वथेति । वस्तुतः कालसंसर्गायोग्यत्वं शबरस्वामिनामप्यसंमतमित्याह–उक्तंचेति । एष इति । विधेयो यागादिरित्यर्थः । परमप्रकृतमुपसंहरति—तस्मादिति । एवमर्थवादत्वं नामकीर्तनवाक्यानां प्रतिकूलमिति मत्वा दूषितम् । वस्तुतस्तु तदनुकूलं विधेयस्यैव स्तुतिसंबन्धेनार्थवादत्वादेव विधिकल्पनादित्याह–भवतु वेति । ननु तथाऽपि फलाभावादकर्तव्यं नामकीर्तनमित्याशङ्क्यार्थवादोपस्थितं पापक्षयात्मकमेव फलमित्याह–तत्र चेति ।

एवं च विधिविभक्तिरहितानां नामकीर्तनवाक्यानां विधिपरत्वमुक्त्वा विधिविभक्तिमन्ति वाक्यान्युदाहरति—अपि चेति । एकेनैकाग्रेण सति कथके श्रोतव्यः, सति श्रोतर्यसति वा कीर्तितव्यः, अनेन गुणकीर्तनं नामकीर्तनं च विधीयतेऽविशेषात्, श्रवणकीर्तनयोरसंभवे ध्येयः स्मर्तव्यः, स्मरणस्याप्यसंभवे पूजनीयः, नित्यदेस्येवं यथा कथं चित्सर्वः समयो भगवत्परतयैव नेतव्य इति भावः । गीतानि पूर्वैरिति शेषः । अध्याहारमयाद्वीतिविशिष्टनामोच्चारणविधानं वा तदर्थकानि भगवत्प्रतिपादकानि तस्येति वक्तव्येऽर्थग्रहणात्तत्फलकानि च ततश्च नामकीर्तनेऽस्य भगवत्प्राप्तिः फलमिति भावः । विलज्ज इत्युच्चैरुच्चारणविधानम्, असङ्ग इति नाधिकारिविशेषणं सर्वाधिकारत्वात्किं त्वसङ्गो विषयासङ्गरहितोऽविचरेद्भवेदिति यावत्, ततश्च नामकीर्तने विषयासङ्गो गच्छतीति भावः । तद्रतिकराणि भगवत्प्रीतिकराणि कर्तुरेव वा तस्मिन्भगवति प्रीतिकराणि । चतुर्द्धेति । प्रणवाभ्यासो धारणासीवसतिः शतरुद्रियजपो नामोच्चारणं चेति तदेतदग्रे मूल एव वक्ष्यते ।

ननु भवतु नामकीर्त्तनविषयो विधिः, तथाऽपि नित्य एवासावहरहः स्वाध्यायमधीयीनेतिवत्

संकीर्त्तयेन्नगन्नाथं वेदं वाऽपि समभ्यसेदि-

ति समभिव्याहारात्, ततश्च घृतकुल्याऽऽदिफलश्रुतेरिव पापक्षयफलश्रुतेरर्थवादत्वं, तदयुक्तम् अविशेषात् न हि नित्योऽनित्यो वा विधिः फलं विना समाप्यते ततश्चाश्रुतफलकल्पनादार्थवादिकफलस्वीकरणमेव न्याय्यं तस्माद्विवज्ञितार्थस्यैव नामकीर्त्तनस्य पापक्षयहेतुत्व प्रतिपादकानि पुराणवचनानीति ।

कृष्ण कृष्ण मधुसूदन विष्णो
कैटभान्तक मुकुन्द मुरारे ।
पद्मनाभ नरसिंह हरे श्री-
राम राम रघुनन्दन ! पाहि ॥

इति श्रीमदनन्तानन्दरघुनाथपादपद्मोपजीविनो लक्ष्मी-

**धरस्य कृतौ भगवन्नामकौमुद्यां पुराणवचनानां विवक्षितार्थत्वप्रतिपादनं नाम प्रथमः परिच्छेदः ॥**

नामकीर्तनविधिमङ्गीकृत्य फलमाक्षिपति—नन्विति । तत्र हेतुमाह—संकीर्तयेदिति—समभिव्याहारादिति । नित्यवेदाभ्याससहपाठादित्यर्थः । ततश्चेति । पयसः कुल्या ह्रदान् पितॄन्स्वधा अभिवहन्तीत्यादिफलश्रवणमध्ययनस्य यथाऽर्थवादः, एवं पापक्षयफलश्रवणं नामकीर्तनविधेरर्थवाद इत्यर्थः । अविशेषादिति । नित्यस्य काम्यस्य वा विधेः फलाकाङ्क्षाया अविशेषादित्यर्थः । तदेवाह—न हीति । अहरहः स्वाध्यायाध्ययनस्यापि नित्यत्वात्पापक्षय एव फलम् । उपसंहरति—तस्मादिति । प्रथमपरिच्छेदसमाप्तौ नामोच्चारणरूपं मङ्गलं कुर्वन्नाममाहात्म्यप्रतिपादकस्य ग्रन्थस्य प्रचयगमनरूपं फलं प्रार्थयते—कृष्णेति ।

यन्नामकीर्तनं सद्यः सर्वपापनिवर्तनम् ।
तं वन्दे परमानन्दसिन्धुं श्रीनन्दनन्दनम् ॥

इति श्रीमदापदेवसूनुनाऽनन्तदेवेन कृते श्रीभगवन्नामकौमुदीप्रकाशे
प्रथमः परिच्छेदः समाप्तः ॥

# श्रीभगवन्नामकौमुदी ।

द्वितीयः परिच्छेदः—

श्रीकृष्णाय नमः ।

श्रीकान्त कृष्ण करुणाकर कञ्जनाभ
कैवल्यवल्लभ मुकुन्द मुरान्तकेति ।
नामावलीं विमलमौक्तिकहारलक्ष्म-
लावण्यबन्धनवतीं करवाणि कण्ठे ॥

एवं स्थिते नामकीर्तनस्य पापक्षयं प्रति साधनत्वे पुनरिदं विचार्यते—किं कस्य चित् साधकतमस्याङ्गभूतं तद्; उत स्वयमेव साधकमिति ?

ननु निर्णीतमेतत् फलश्रुतेरर्थवादत्वनिराकरणेन, सत्यं; तदेव पुनराक्षेपान्तरनिराकरणेन दृढीक्रियते स्थूणानिखननन्यायेन । तत्र मन्वाद्युक्तप्रायश्चित्ताङ्गमिति तावत्प्राप्तं, तथा हि–विकल्पसमुच्चयव्यवस्थानामन्यतमाश्रयणेन स्मृतिपुराणविरोधस्तावदवश्यं परिहर्तव्यः, समानमूलत्वेनान्यतरस्याप्यनतिलङ्घनीयत्वात्, तत्र विकल्पव्यवस्थे तावन्न युज्येते नित्यवदवगतस्य पाक्षिकत्वे सामान्यश्रुतस्य च विशेषविषयत्वे शब्दवचनस्वारस्यभङ्गप्रसङ्गाद्, अतः समुच्चयोऽत्र परिशिष्यते ।

प्रकाशस्य

द्वितीयः परिच्छेदः ।

॥ श्रीगोपीरमणाय नमः ॥

द्वितीयपरिच्छेदार्थं प्रतिजानीते—एवमिति । पूर्वपरिच्छेदेन पौनरुक्त्यं शङ्कते—नन्विति । नामकीर्तनस्य किञ्चिदङ्गत्वे फलश्रुतिरर्थवाद एव

स्यादतः स्वप्रधानमेव तदेतदिति भावः। तदेवेति। स्वप्रधानमेवेत्यर्थः। आक्षेपान्तरमाह–तत्रेति। विकल्पेति। पापक्षयकामेन नामकीर्तनं कर्तव्यं; मन्वाद्युक्तप्रायश्चित्तं वेति विकल्पः। उभयं कर्तव्यं न त्वेकेन पापक्षय इति समुच्चयः। कस्य चिदधिकारिणो नामकीर्तनं पापक्षयसाधनं कस्य चिन्मन्वाद्युक्तप्रायश्चित्तमित्यादि व्यवस्था। स्मृतीति। पापक्षयोद्देशेन मन्वादिस्मृतिभिर्द्वादशाब्दादि विधीयते पुराणवचनैस्तु नामकीर्तनं विधीयते तत्र विकल्पसमुच्चयव्यवस्थानामन्यतमस्यानाश्रयणे स्मृतिपुराणवचनानामप्रामाण्यमेव स्यादिति भावः। अयमेव विरोधशब्दार्थः। तयोरप्रामाण्यमेव किं न स्यादत आह–समानेति। श्रुतिमूलकत्वात्स्मृतिपुराणवाक्यानामप्रामाण्यायोगादित्यर्थः। अङ्गप्रधानभावेन समुच्चयं वक्तुं विकल्पपक्षं व्यवस्थापक्षं च निराकरोति–तत्रेति। नित्यवदिति। पापक्षयोद्देशेन नामकीर्तनं द्वादशाब्दादि च नित्यवच्छ्रूयते तयोर्विकल्पे तु पाक्षिकत्वं स्यात् ततश्च नित्यवच्छ्रवणबाधाच्छब्दस्वारस्यभङ्गः स्यात्, अधिकारिविशेषेण वा देशविशेषेण वा व्यवस्थाऽऽश्रयणे सामान्यश्रुतस्य विशेषे लक्षणया शब्दस्वारस्यभङ्गः स्यादित्यर्थः।

ननु समुच्चयेऽपि निरपेक्षसाधनत्वेनावगतस्य सापेक्षत्वे स्वारस्यभङ्गस्तदवस्थ एव, मैवं, नैरपेक्ष्यं हि साधनान्तराभावः स च नानयोरन्यतरस्यापि विषयः स्वविषयस्य साधनत्वे साधनान्तरस्य चाभावे प्रमेये वाक्यभेदप्रसङ्गात्, स तु योग्यप्रमाणान्तरानुदयस्य विषयः, उपलभ्यते तु प्रमाणान्तरं साधनान्तरग्राहकम्, अतः प्रमाणद्वयपर्यालोचनायां परस्परसापेक्षत्वात् स्मार्तपौराणयोः समुच्चय एव श्रेयान्।

नन्विति। नामकीर्तनवाक्येभ्यो हि तदेव निरपेक्षसाधनं पापक्षयस्य प्रतीयते, मन्वादिस्मृतिभ्यस्तु द्वादशाब्दादि निरपेक्षसाधनं पापक्षयस्य प्रतीयते तयोः समुच्चये तु सापेक्षत्वाच्छब्दस्वारस्यभङ्गः स्यादेवेति भावः। नामकीर्तनवाक्यात्तस्य पापक्षयसाधनत्वं प्रतीयते न तु निरपेक्षत्वं, तस्याशाब्दत्वादेवं मन्वादिवाक्याद् द्वादशाब्दादेः पापक्षयसाधनत्वमेव प्रतीयते न तु निरपेक्षत्वमुक्तहेतोरिति परिह-

रति । मैवमिति । नैरपेक्ष्यस्याशाब्दत्वे कारणमाह—नैरपेक्ष्यमिति । अनयोरिति । नामकीर्तनमन्वादिवाक्ययोरित्यर्थः । साधनत्वं निरपेक्षत्वं च शब्दप्रमेयं किं न स्यात्तत्राह—स्वविषयस्येति । नामकीर्तनवाक्यं मन्वादिवाक्यं च स्वस्वविषयस्य साधनत्वं साधनान्तराभावात्मकं निरपेक्षत्वं च बोधयद्भिर्येतेत्यर्थः । शब्ददूषणं वाक्यभेदरूपमुक्त्वाऽर्थदूषणमाह-स त्विति । योग्यानुपलब्धेरित्यर्थः । तया ह्यभावो गृह्यते न चात्र साऽस्ति, प्रमाणद्वयेन साधनद्वयोपलम्भादित्यर्थः, अतो न शब्दस्वारस्यभङ्गः, प्रत्युत शब्दसामञ्जस्यमेव समुच्चयपक्षे स्यादित्युपसंहरति-अत इति । स्मार्तेति । द्वादशाब्दादिनामकीर्तनयोरित्यर्थः ।

नन्वेवमपि समुचितयोरनयोर्दर्शपौर्णमासयोरिव कारणत्वमेव किं न स्याद् विपरीतो वाऽङ्गप्रधानभावः? पुराणवचनेभ्य एव भगवद्भजनस्य प्रायश्चित्तकर्माङ्गत्वावगमादिति ब्रूमः—श्रीभागवते तावत्

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ।
न निष्पुनन्ति राजेन्द्र ! सुराकुम्भमिवापगा—

इति भगवद्भजनस्य प्रायश्चित्ताङ्गत्वमवगम्यते, प्रायश्चित्तानि न पुनन्तीति न तस्यार्थः, मन्वादिवचनव्याकोपाद्, नारायणपराङ्मुखमिति विशेषणवैयर्थ्याच्च, अपि च प्रायश्चित्तान्यनुष्ठितान्यपि नारायणपराङ्मुखं न पुनन्ति नारायणपरायणन्तु पुनन्तीत्यर्थः । अतः स्वतः पुनतां तेषां नारायणपरायणत्वमङ्गमित्यवगम्यते, तथा तत्रैव—

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्व्वं करोति निश्छिद्रं नामसङ्कीर्त्तनं हरेरिति,

तवेति वा, सर्व्वकर्मसाद्गुण्यार्थत्वं हि हरिकीर्तनस्य सिद्धवदनूद्यते,
तथा स्कन्दपुराणेऽपि

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियाऽऽदिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतमिति ॥

अनुवादश्च प्राप्तिमनुमापयति निवीताधिकरणन्यायेनोपव्यानविधायकवाक्यशेषे निवीतानुवादवत् ।

श्रीविष्णुपुराणेऽपि

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय ! देवेन्द्रत्वादिकं फलमिति—

कर्माङ्गत्वमवगम्यते हरिस्मरणस्य, यदत्र स्मरणं स्वातन्त्र्येण विवक्षितं किमिदं जपहोमार्चनादिष्विति, अतः सर्व्वकर्म्माङ्गत्वाद् भगवत्कीर्त्तनस्मरणयोः, प्रायश्चित्तस्यापि तदन्तःपातित्वात्प्रायश्चित्ताङ्गत्वेनैव नामकीर्त्तनं पापक्षयहेतुर्न्न स्वतन्त्रमिति ।

ननु समुच्चयेऽपि मन्वाद्युक्तप्रायश्चित्तं प्रधानं नामकीर्तनं तदङ्गमेवमेव कुतः ? किं तु स्वर्गफले दर्शपूर्णमासयोरिव पापक्षये मन्वाद्युक्तप्रायश्चित्तनामकीर्तनयोः समत्वेन समुच्चयः किं न स्यादिति शङ्कते—नन्विति । विपरीत इति । नामकीर्तनं प्रधानं मन्वाद्युक्तप्रायश्चित्तमङ्गमित्येवंरूपः किं न स्यादित्यर्थः । पूर्वपक्षो परिहरति—पुराणेति । न च भजनस्य कर्माङ्गत्वेऽपि किं नामकीर्तनस्येति वाच्यं, भजनस्य नवविधत्वेन कीर्तनस्यापि तदङ्गत्वावगमात् । नारायणपराङ्मुखमिति द्वितीयान्तं पुरुषविशेषणं, प्रायश्चित्तचरणक्रियाविशेषणं वा, तदेव दर्शयति—प्रायश्चित्तानि नेति । तस्येति । भागवतवचनस्येत्यर्थः । अपि त्विति । नारायणपराङ्मुखशब्दस्य द्वितीयान्तत्वे स्पष्टैव योजना । फलितं वचनार्थमाह—नारायणपरायणमिति । भागवतवचनार्थमुपसंहरति-अत इति । स्वत इति । प्राधान्येनेत्यर्थः । परायणत्वं भजनम् । मन्त्रतो न्यूनं तन्त्रतो न्यूनं देशतो न्यूनं कालतो न्यूनम् अर्हशब्दवाच्यशुचित्वादियोग्यतातो न्यूनं वस्तुतो द्रव्यतो न्यूनं सर्वं कर्म निश्छिद्रं पूर्णं करोति नामकीर्तनमिति वचनार्थः । साद्गुण्यं साङ्गत्वं, तदर्थत्वं तदङ्गत्वं । सिद्धलकारेणानूद्यत इत्यर्थः । न चानुवादेऽपि कथं

नामकीर्तनस्य प्रायश्चित्ताङ्गत्वेन विधिस्तत्राह-अनुवाद इति। प्रायश्चित्तपोषश्लाघकतया विधिमनुमापयति कल्पयति; निवीताधिकरणन्यायेनेत्युक्तं विवृणोति—उपव्यानेति। "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इत्युपव्यानविधेः शेषे "निवीतं मनुष्याणामि"ति निवीतानुवादो यथा निवीतस्य मनुष्यप्रधानातिथ्यादिकर्माङ्गतया विधिं कल्पयति तथेत्यर्थः। तृतीये—विधिशेषे "निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वाद्" ।३।४।१। इति, इदं च क्त्वाचिन्ताऽधिकरणं, निवीतं मनुष्याणामित्यस्यार्थवादत्वात्। मैत्रेयेति संबोधनम्। तदेवाह—यद्यत्रेति। उपसंहरति—अतइति। नन्विह सर्वकर्माङ्गतया पापक्षयहेतुत्वमुच्यते नामकीर्तनस्येति तत्राह-प्रायश्चित्तस्येति।

अत्र समाधीयते—स्वप्रधानमेव पुरुषोत्तमकीर्त्तनं पापप्रध्वंसनहेतुः,

श्रीभागवते तावत्

कर्म्मणा कर्म्मनिर्हारो न ह्यात्यन्तिक इष्यते।
अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शनमिति;
कर्मात्मकप्रायश्चित्तनिन्दापूर्वकं—
केचित्केवलया भक्त्या वासुदेवपरायणाः।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्कर—

इति ब्रह्मविद्यासमानस्कन्धतया केवलायाः कीर्त्तनादिलक्षणाया भगवद्भक्तेः प्रायश्चित्तत्वेनावधारितत्वात्,

१—पूर्वतन्त्रस्य तृतीयाध्याये तुरीयपादे प्रथमोऽधिकरणे—"निवीतं—मनुष्याणां, प्राचीनावीतं पितृणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति विषयवाक्यमादाय; निवीतस्य विधित्वमाशङ्क्य; प्राचीनावीतोपवीतयोर्वाससोऽधःपातनिबन्धनासौकर्य्यसम्भावनया किल स्वरसप्राप्ते निवीते विधेरनपेक्षणादर्थवादत्वं सिद्धान्तितं, श्रूयमाणस्य प्रशंसाऽर्थवादस्यान्यथाऽनुपपत्त्योपव्यानस्यावश्यके विधेयत्वे निवीतादेरपि विधित्वसनीयतायां वाक्यभेदापाताद् निवीतप्राचीनावीतयोर्मनुष्यपितृसंबद्धतया दैवकर्मानर्हतयोपवीतस्य तदर्हता व्यतिरेकद्वारा स्तुयते निवीतस्यार्थवादो यथा भवति, तथा प्रकृतेऽपि नामकीर्तनविषयकानुवादतोऽपि विधिकल्पना निष्प्रयुक्तेति भावः।

तथा

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥
एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणेत्येतज्जगाद चतुरक्षरम् ॥
नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यतेति—

तत्र तत्रैवकारश्रवणाद्,

एवं नामकीर्तनप्रायश्चित्तयोः पापक्षयेऽङ्गाङ्गिभावेन समुच्चयपक्ष-
ुपपाद्य दूषयति-अत्रेति । कर्मणा द्वादशाब्दादिना कर्मनिर्हारो-
ाप्यते हि । नन्वेवं स्मृतिवचनविरोधः स्यादत आह—आत्यन्तिक-
ेति । कृतेऽपि द्वादशाब्दे पापवासनासद्भावादात्यन्तिकपापनाशो-
नास्ति, अन्यथा पुनः पापाचरणं न स्यादिति भावः । तत्रैव हेतुरवि-
द्वदधिकारित्वादिति । तत्त्वज्ञानाभावात्स्मार्तप्रायश्चित्तानुष्ठातृणां पुनः
पुनः पापाचरणमेव भवतीति नात्यन्तिकः पापनाशइति भावः । किं-
तर्ह्यात्यन्तिकनाशे प्रायश्चित्तं तत्राह—प्रायश्चित्तमिति । विमर्शनं-
ब्रह्मविद्येत्यर्थः । कर्मात्मकेति । द्वादशाब्दादिरूपेत्यर्थः । के चि-
दिति । "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धय"इति विरलत्वात् ।
नीहारं तमः । ब्रह्मविद्येति । यथा हि ब्रह्मविद्या सवासनं पापं क्षपयति;
एवं कीर्तनादिलक्षणा भक्तिरिति भावः । सर्वेषामिति । महापात-
कानुपातकोपपातकप्रकीर्णकादिसकलपापाचरितॄणामित्यर्थः । सुनि-
ष्कृतमिति । सुनिष्कृतमिदमेवेति योजना । द्वादशाब्दादि निष्कृतं-

१—ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः । एते महापातकिनो यश्च तैः सह संवसेदितियोगियाज्ञवल्क्यसूचितानि ब्राह्मणहत्याऽऽदीनि महापापानि, स्तेनस्तु ब्राह्मणस्वामिकसुवर्णचोरः "ब्राह्मणसुवर्णापहरणं महापातकमि"तिवचनेनापस्तम्बीयेन संवादात् । अनुपातकानि पितृपितृव्यादिभार्यागमनादीनि । उपपातकानि गोवधादिभार्याविक्रयान्तानि योगियाज्ञवल्क्योक्तानि । महापातकातिपातकानुपातकोपपातकभिन्नं पातकं प्रकीर्णमुच्यते । अत्रादिशब्देनातिपातकं—प्राह्यमिति संक्षेपः ।

भवति न तु सुनिष्कृतं वासनाक्षयाभावादिति भावः । यतो नाम-व्याहरणात्तद्विषया विष्णुविषया मतिरस्तत्त्वज्ञानं भवतीत्यर्थः । यद्वा यतः कारणाद्विष्णोः स्वनामव्याहर्तृसर्वपातकिविषया मतिरभिमानो भवतीत्यर्थः । अघोनः अघवत इत्यर्थः । अस्याजामिलस्येत्यर्थः । अवधारितत्वाच्छ्रवणादिति पञ्चम्यन्तयोः स्वः धानं पुरुषोत्तम-कीर्त्तनमिति प्रतिज्ञयाऽन्वयः ।

*एतावताऽलमघनिर्हरणाय पुंसां—*
सङ्कीर्त्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण उपैति मुक्तिमि—

त्यनेनापि केवलस्य कीर्त्तनस्य कृत्स्नपापक्षयहेतुत्वमेव समर्थ्यते, यदि हि पर्याप्तवचनोऽयमलंशब्दस्तदा प्रथमा-प्रयोगेण भवितव्यम्; अलं मल्लो मल्लायेतिवद्, इह तु तृतीया दृश्यतेऽतो निवारणवचनोऽयमलंशब्दइत्यलमतिप्रसङ्गेनेतिवत्; ततश्चायमर्थः, भगवतो गुणकर्मनाम्नां सङ्कीर्त्तनमिति यत्पुंसामघनिर्हरणायेत्येतावताऽलम् एतावन्नानुष्ठेयं पापक्षयमात्रस्यातितुच्छत्वाद् भगवत्कीर्त्तनस्यातिगरीयस्त्वादेतदेव विवृणोति-विक्रुश्येति, आमरणमभ्यस्तमहापापोऽजामिलोऽपि पुत्रं विक्रुश्य न हरिं कीर्त्तयित्वा तदपि न स्पष्टं म्रियमाणत्वेन शिथिलकरणत्वात् तथाऽपि दैवगत्या पुत्रनाम्न एव भगवन्नामत्वाद् मुक्तिं समस्तानर्थनिवृत्तिलक्षणां निरतिशयानन्दरूपाञ्च प्राप्तो नानर्थैकदेशस्य पापस्य निवृत्तिमात्रं तत्रापि मुक्तिः किल बभूवेति नैतदैतिह्यमात्रं किन्त्वयमधुनैव मुक्तिमुपयातीति साङ्गुलिनिर्देशमभिधीयते धर्म्मराजेन, तत्समये तस्यार्थस्य वर्त्तमानत्वाद् उक्तलक्षणाया मुक्तेरयत्नसिद्धेना-

नन्वयेनत्वेऽपि भगवल्लोकप्राप्तिलक्षणाया अपि मुक्ते-स्तात्पर्य्यं, तस्माद्विवक्षितार्थलाभः,

एतावताऽलमित्यस्यार्थमाह—अनेनार्पीति। केवलस्य साधनान्तरनिरपेक्षस्य यस्य मुक्तिः फलं तस्य किमु वक्तव्यं कृत्स्नपापक्षयहेतुत्वमिति कैमुतिकन्यायेन समर्थ्यत इति भावः। तदेवाह—यदीति। पर्याप्तावेतावानलमिति प्रयोगः 'स्यादित्यर्थः। एतावतेति तृतीयया निवारणवचनत्वेऽलंशब्दस्य साधनान्तरनिषेधः पर्यवस्यति। श्लोकस्योत्तरार्द्धं व्याचष्टे—एतदेवेति। उपेतानिवर्तमानापदेशस्य तात्पर्यमवबुध्येवोक्तं धर्मराजेन यमेन। ननु सर्वानर्थनिवृत्तिपरमानन्दरूपा मुक्तिरजामिलस्य कथं धर्मराजेनात्रैवेहोक्तेति, अयदिष्टेनादृश्यत्वेन, भगवल्लोकप्राप्तिरूपा मुक्तिस्तु जायत एव सा च परममुक्तिस्वरूपैवेति परममुक्तिमुपेतानि विवक्षितार्थो लभ्यत—इति भावः।

ततश्चापातालवनितले निमग्नमुपरि च स्वायंभुवभुवनमुल्लिखन्तं सर्वतो विसारिविविधशाखोपशाखं संसारमहामहीरुहमेव समूलं गिलतो भगवन्नामग्रहणमहादावदहनस्य जननमरणमध्यवर्तिनः सर्वानेव क्षणेन शून्यतां नयन्तीभिरनन्तजन्मानुबन्धिनीभिरतिबहुलाभिरप्यंहःस्थूलपटलीभिः कुक्षिकोटरकुहरप्रान्तोऽपि मनाङ् न पूर्यते तस्य कथं तद्ग्रसने साधनान्तरसाकाङ्क्षत्वशङ्काऽवतारः, अपि च

न तथा ह्यघवान्राजन् पूयेत तपआदिभिः।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया॥

---

१—मोक्षः किलानादिदुःखपरम्पराऽत्यन्तोच्छेदो, नित्यसुखं चेति प्रथमं—द्विधा, शेषोऽपि नित्यसुखात्मता तदनुभवश्चेति, अत्रादिमः सायुज्याख्यः, चरमस्तु सालोक्यसार्ष्टिसारूप्यसामीप्यभेदाच्चतुर्विधः, सर्वमेतदवसरविशेषे सप्रमाणं निरूपयिष्यते। मुख्यधात्वर्थानुगुण्यतो दुःखात्यन्तनिवृत्तिरेव तत्स्वरूपं, शिष्टाः पञ्चविधास्तु तदौत्तरकालिक्योऽधिकारिविशेषभागिन्यो भवन्ति, दुःखात्यन्तनिवृत्तिस्तु तन्नान्तरीयिकेति क्व चित्तदनुल्लेखोऽपि न न्यूनताऽऽवहः।

तस्य कृष्णस्य पुरुषाणां निषेवया, कृष्णे निवेशितेन्द्रियः कीर्त्तनादिपर इति,

न निष्कृतैरुदितैर्ब्रह्मविद्भि—
स्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतै—
स्तदुत्तमश्लोकगुणोपलम्भकम्—

इति च कर्म्मभक्तिसाध्ययोः शुद्ध्योर्वैसादृश्यमुपदिश्यते; तदपि नाङ्गाङ्गिभावे संभवति, अङ्गप्रधानयोरेकफलत्वात्,

श्रीविष्णुपुराणेऽपि

प्रायश्चित्तान्यशेषाणि तपःकर्म्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परमि—

ति कर्मात्मकेभ्यः सकाशात् कृष्णानुस्मरणस्योत्कृष्टत्वमभिधीयते तदपि प्रायश्चित्ताङ्गत्वे हरिस्मरणस्य न संजाघटीति, अङ्गिनः सकाशादङ्गस्योत्कृष्टत्वायोगात्,

प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परमि-

त्यत्रैकशब्दोऽपि नैरपेक्ष्यमेव प्रतिपादयति, यो हि सजातीयस्मरणमपि द्वितीयं न सहते स कथं जात्यन्तरं सहेत,

कैमुतिकन्यायमुपसंहरति—ततश्चेति । भगवन्नामग्रहणरूपस्य महादावदहनस्य कुक्षिकोटरकुहरभ्रान्तोऽप्यंहस्तूलपटलीभिर्न पूर्यत इत्यन्वयः। संसार एव महान्महीरुहो वृक्षस्तम्, एवकारः साकल्यवाची, समूलं गिलत इति दहनविशेषणम्, आपातालमघनीतले निमग्नमिति उल्लिखन्तमिति विविधशाखोपशाखमिति च संसारवृक्षविशेषणं, जननमरणमध्यवर्तिन इति द्वितीयान्तम्, एकेति क्षणविशेषणं, शून्यतां व्यर्थतां कदाऽपि भगवन्नामग्रहणप्रभावान्नयन्तीभिः प्रापयन्तीभिरिति पटलीविशेषणं, कोटरं वृक्षस्यान्तरावकाशवान्प्रदेशः, कुक्षिरेव कोटरं तस्य कुहरं-

छिद्रं, मनाग् अल्पः, तस्य नामग्रहणदावदहनस्य तद्ग्रसने अंहःपटली, दहने, ततश्च प्राधान्यमेव नामग्रहणस्येति भावः, तत्पूरुषनिषेवयेत्यस्य कृष्णार्पितप्राण इत्यग्रान्वयमाह—तस्येति। अर्पितप्राण इत्यस्यार्थमाह· निवेशितेन्द्रिय इति। तस्यैव प्रकारमाह·कीर्तनेत्ति। वागिन्द्रियं कीर्तन परं, श्रोत्रं श्रवणपरमित्यादि। ब्रह्मविद्भिरुदितैर्व्रतादिभिरिति योजना। उदाहृतैः उच्चरितैः। हरिनामोच्चारणस्य फलान्तरमाह—तदिति। उत्तमः श्लोकः कीर्तिर्यस्य हरेस्तस्य गुणा ऐश्वर्यादयस्तेषामुपलम्भकं· प्रापकमित्यर्थः। भक्तिः कीर्तनादिरूपा सर्वोभवीति संभवति। पुराणा· न्तरपर्यालोचनान्नामकीर्तनस्य प्राधान्यमाह—श्रीविष्णुपुराण इति। संजायतीति घटते। जात्यन्तरं तपःकर्मादिरूपं प्रायश्चित्तम्।

श्रीनरसिंहपुराणेऽपि

इत्युदीरितमाकर्ण्य कृष्णवाक्यं यमेरितम्।
नारकाः कृष्ण कृष्णेति श्रीनृसिंहेति चुकुशु-

रित्यारभ्य प्राप्तनरकाणामपि पापिनां कीर्त्तनमात्रादेव नरकार्णवादुत्तीर्णानां वैकुण्ठसङ्गमउपवर्ण्यते,

श्रीस्कन्दपुराणेऽपि

हरहरहरशब्दमादितो वै
मुहुरभिधाय मुनीन्द्रवृन्दवर्य्यः।
अपठदखिलमेघघोषतुल्यं-
सकलहिताय नमः शिवाय शब्दमि—

त्यारभ्य; श्रवणमात्रादेव नरकान्निर्गत्य शिवपुरप्राप्तिरभिहिता,

श्रीविष्णुधर्म्मे तु स्पष्टमेव निरपेक्षसाधनत्वमुपवर्णितम्,

अथ पातकभीतस्त्वं सर्व्वभावेन भारत।
विमुक्तान्यसमारम्भो नारायणपरो भवेति॥

तथा तत्रैव

गोविन्देति समुच्चार्य पदं क्षपितकिल्विषः।
क्षत्रबन्धुर्विशुद्धात्मा गोविन्दत्वमुपेयिवानि-

ति प्रायश्चित्तपराङ्मुखस्यापि क्षत्रबन्धोः कीर्त्तनमात्रादेव पापक्षयो दर्शितः, तस्मात्केवलमेव हरिकीर्त्तनं कृत्स्नपापक्षयहेतुः, नान्यसमुच्चितं नतरामन्याङ्गभूतमिति।

विष्णुनामकीर्तनस्य वैकुण्ठप्राप्तिफलकत्वादपि प्राधान्यमित्याह—श्रीति। श्रीनृसिंहेति। शिवनामकीर्तनस्य कैलासप्राप्तिफलकत्वात्प्राधान्यमाह—हरहरेति। सकलहिताय नमः शिवायेति शब्दमपठदित्यन्वयः। अखिलमेवगोष्पदतुल्यं यथा स्यात्तथेति। उच्चैरित्यर्थः। विमुक्तेति। त्यक्तप्रायश्चित्तान्तरारम्भ इत्यर्थः। श्रवणकीर्तनादिना नारायणपरो भवेत्यर्थः। गोविन्दसायुज्यप्राप्तिफलत्वाच्च नामकीर्तनस्य नाङ्गत्वमित्यभिप्रेत्याह—गोविन्देति। उपसंहरति—तस्मादिति। केचित् केवलया भक्त्येत्यादिवाक्यादित्यर्थः।

ननु किमिदं कैवल्यं नाम? किं साधनस्य स्वरूपमेव उत साधनान्तराभावः, उतान्यस्यासाधनत्वं,? तत्र यदि स्वरूपं तर्हि समुच्चयेऽपि स्वरूपस्यानपायादविरोधः, अथ साधनान्तराभावः तदोभयविधानाद्वाक्यं भिद्येतेत्यवादिष्म, विशिष्टविधाने तु सति साधनान्तरे; कृतेऽपि कीर्त्तने पापक्षयो नाभविष्यत् साधनान्तराभावविशिष्टस्यैव साधनत्वाद्, अथान्यस्यासाधनत्वं तदाऽपि वाक्यभेद एव, एकेन वाक्येनोभयविधानायोगाद्, अथ विशिष्टविधानमिति चेत्तदाऽप्यन्यगतस्यासाधनत्वस्यान्यविशेषणत्वेन विधानायोगात्।

कैवल्यमाक्षिपति—नन्विति। नामकीर्तनस्वरूपं वा द्वादशाब्दाद्यभावो वा द्वादशाब्दादेरसाधनत्वं वेति विकल्पाः। उभयेति। पापक्षये नामकीर्तनविधानात्साधनान्तराभावविधानाच्चेत्यर्थः। अवादिष्मेति। नैरपेक्ष्यं हि साधनान्तराभाव इत्यादिपूर्वपक्षग्रन्थ इत्यर्थः। साधनान्तराभावविशिष्टं नामकीर्तनं पापक्षयसाधनमिति विशिष्टविधाः याह—विशिष्टेति। कृतेऽपि साधनान्तरे नामकीर्तनात्पापक्षयो भवति स न स्यादित्यर्थः। कृते साधनान्तरे विशिष्टाभावादिति। नामकीर्तन-

स्य साधनत्वं द्वादशाब्ददेरसाधनत्वं च यदि विधीयते तदा वाक्यभेद इत्यर्थः। अन्यासाधनत्वविशिष्टसाधनत्वं विधीयतां तत्राह—उच्यतेति।

उच्यते—कारणस्य पौष्कल्यं कैवल्यं, तदेव च निरपेक्षं पौष्कल्यं कार्य्यपूर्वक्षणनियतिः; यां सामग्रीमाचक्षते तद्विदः, यदनन्तरं कार्य्यमवश्यमात्मानं लभते तत्पुष्कलं कारणमिति यावद्, तच्च न साधनान्तरसव्यपेक्षत्वेऽवकल्पते, तच्च क्व चिदेकस्य क्व चिद् द्वयोः क्व चिद्बहूनां तत्र यदा द्वयोर्बहूनां वा तदा स्वाश्रये व्यासज्य वर्त्तते पौष्कल्यं, यदा पुनरेकस्य तदा कार्त्स्न्येन।

ननु समवाय्यसमवायिनिमित्तजन्यं सर्व्वं कार्य्यमारम्भवादे, परिणामविवर्त्तयोः पुनरुपादाननिमित्तजन्यं, तत् कथमेकस्य पौष्कल्यम्?

सिद्धान्ती कैवल्यं निर्वक्ति—कारणस्येति। पौष्कल्यमेव तावदाह—यदनन्तरमिति। तच्चेति। पुष्कलत्वमित्यर्थः। अन्यापेक्षत्वे पुष्कलत्वमेव न स्यादित्यर्थः। क्व चिदेकस्येति। यथा विभागस्य पूर्वदेशसंयोगनाशे। द्वयोरिति। दर्शसमुदायापूर्वपौर्णमाससमुदायापूर्वयोः परमापूर्वे यथा। बहूनामिति। घटे दण्डादीनाम्। तत्रापि विशेषमाह—यदेति—कार्त्स्न्येनेति। स्वाश्रये वर्त्तत इत्यनुषङ्गः। ततश्च नामकीर्त्तनमेकस्यैव पुष्कलकारणं पापक्षय इति भावः। एकस्य पुष्कलकारणत्वमाक्षिपति नन्विति। आरम्भो नामात्यन्तभिन्नकार्य्योत्पत्तिः, परिणामो नाम कार्यकारणयोः परमार्थतो भेदाभेदौ, विवर्त्तो नाम कार्य्यस्य मिथ्यात्वम्। आरम्भवादो नैयायिकादीनां, परिणामवादो भास्करीयाणां, विवर्त्तवादो वेदान्तिनाम्। अतः कथमेकस्य तदुक्तं, केवलया भवतीत्यादिरूपमित्यर्थः।

उच्यते—निमित्तकारणविषयमेतत् पौष्कल्याभिधानं, नोपादानविषयं. फलोपादानस्यात्मनः प्रसिद्धत्वेन

१—एतदारम्भवादानुसारमुक्तमेव
अनिर्वचनीयतावादिनामित्येकेऽन्ये

शास्त्रानपेक्षणाद्, उक्तं हि भाष्यकृद्भिः "जानात्येवासौ मयैतत् कर्तव्यमिति, उपायन्तु न वेद तस्योपायः कथनीय" इति । ननु निमित्तकारणस्यापि कथमेकस्य पौष्कल्यं? न हि निमित्तकारणमात्रात् किंचित् कार्य्यं सिध्यति, तदयुक्तम्, आलोकसंयोगमात्रादन्धकारनिवृत्तेर्दर्शनात् । ननु यदि पौष्कल्यमेव निरपेक्षं; कथं तर्हि व्रीहियवयोः? उच्यते—तत्र कारणत्वस्यैव प्रत्येकं परिसमाप्तत्वात् । अन्योन्यनिरपेक्षत्वमेव न सर्व्वनैरपेक्ष्यमितिकर्तव्यतासाकाङ्क्षत्वात् पौष्कल्यं तु स्वव्यतिरिक्तसर्वनैरपेक्ष्यम्. अतश्च केवलया भक्त्येत्यमर्थः, मधुभिदभिधानमेव मनागुद्दिश्यमानमशेषपापप्रध्वंसस्य पुष्कलं कारणं तरणिरिव गगनाङ्गनमवतीर्णस्तिमिरपटलपाटनस्य, तच्च पौष्कल्यं कारणत्वस्य विशेषणं न भक्तेः, भक्तेः कैवल्ये कारणत्वे च विधेये वाक्यभेदो मा प्रसाङ्क्षीदिति ।

प्रसिद्धत्वेनेति । अहंप्रत्ययगम्यत्वेनेत्यर्थः । आत्मनः शास्त्रानपेक्षणं शबरस्वामिसंमत्याऽपि दर्शयति—उक्तं हीति । असौ पुरुष एतत्फलं मया कर्तव्यं साधनीयमिति जानात्येवेति योजना, एवकारश्चैतच्छास्त्रगम्यमिति भावः । नन्वित्यादिचोद्यपरिहारौ स्पष्टौ । कारणस्य पौष्कल्यं कैवल्यं तदेव च नैरपेक्ष्यमिति पूर्वग्रन्थोक्तमाक्षिपति—ननु यदीति । कथं तर्हीति । नैरपेक्ष्यमित्यनुषङ्गः । व्रीहिभिर्यजेत यवैर्यजेतेति तृतीयाभ्यां नैरपेक्ष्यं व्रीहियवयोः प्रतीयते तन्न संभवति प्रोक्षणादीतिकर्तव्यतासापेक्षत्वादिति भावः । तत्र = व्रीहियवस्थले । अन्योन्येति । व्रीहीणां यवनिरपेक्षत्वं यवानां व्रीहिनिरपेक्षत्वमित्यर्थः । उपसंहरति—अतश्चेति । मनाग् = ईषत् । उच्चार्यमानमुच्चार्यमाणमित्यर्थः । केवलया भक्त्येत्यादेर्विवक्षितं वाक्यार्थमाह—तच्चेति । विधेये

दण्डमाह—कैवल्य इति। भक्तेः पापक्षयं प्रति कारणत्वे तस्याश्च कैवल्ये विधीयमाने वाक्यभेदः स्यादिति भावः।

ननु भक्तेरेव विशेषणं कैवल्यं केवलया भक्त्येति भक्तिसामानाधिकरण्याद्? मैवं, कारणत्वविशेषणत्वेऽपि तत्सामानाधिकरण्योपपत्तेः, तन्तुभिरुपादानैः पटं—कुविन्दः करोतीतिवत्, तत्र हि कारणं विशिंषदुपादानत्वं तद्द्वारेण तन्तूनपि विशिनष्टि तथेहापि; अन्यथा कैवल्यस्य भक्तिविशेषणत्वं वाजपेयोक्तौ वैरूप्यदोषोऽपि प्रसज्येत, तत्र हि वाजपेयशब्दस्यान्नादिद्रव्यवचनत्वे करणभूतं द्रव्यं प्रति यजत्यर्थस्य प्राधान्यात् फलापूर्वं प्रति च गुणभावात् प्रधानत्वगुणत्वोद्देश्यत्वविधेयत्वज्ञातत्वाज्ञातत्वानि परस्परविरुद्धान्येकस्यां प्रतीतावेकस्यैव प्रसज्येरन्निति नामधेयत्वमेव तस्य समर्थितं तथेहापि केवलया भक्त्येति कैवल्यगुणयुक्ताया भक्तेः फलसाधनत्वे विवक्षिते तस्याः कैवल्यं प्रति प्राधान्यात् फलं प्रति च गुणभावाद्विरुद्धत्रिकद्वयापत्तिरनिवार्यैव; तस्मात्कारणविशेषणमेव पौष्कल्यम्।

आक्षिपति—नन्विति। सामानाधिकरण्यादिति। समानविभक्त्यन्तत्वादित्यर्थः। तत्सामानाधिकरण्येति। भक्तिसामानाधिकरण्येत्यर्थः। तत्र दृष्टान्तमाह—तन्तुभिरिति। उपादानस्य कारणत्वविशेषणत्वेऽपि तन्तुसामानाधिकरण्यं यथा तथेत्यर्थः। तत्रापि तन्तुविशेषणत्वं—प्रतीयत इत्याशङ्क्याह—तत्र हीति। विशिंषद्व्यावर्त्तयत्। विशिनष्टि

---

१—अयंभावः—विधेयभेदाद्वाक्यभेदो दुर्निवारो यतो विधेयभेदाद् विधिभेद आवश्यकः "सकृदुच्चरितः शब्दः सकृदेवार्थमवगमयति नासकृदि" तिन्यायेनैकः शब्द एकया वृत्त्या खलु सकृदर्थं बोधयेद्, असकृदर्थंबुबोधयिषायामावृत्तिः कार्या सा च सति गत्यन्तरेऽप्रामाणिकीति प्रमाणप्रतिपन्नायामस्यां भवत्यपि क्वचिद्वाक्यभेदो नान्यथेति भावः।

ऽप्यावर्त्तयति । तथेहापीति । कैवल्यं कारणत्वं विशिंषन्नक्तिं विशिनष्टीत्यर्थः । कैवल्यस्य भक्तिविशेषणत्वे दोषान्तरमाह—अन्यथेति । वाजपेयोक्त इति । वाजपेयाधिकरणोक्त इत्यर्थः । तमेव प्रपञ्चयति—तत्र हीति । वाजपेयेन स्वाराज्यकामो यजेतेति वाक्ये वाजपेयपदं—विधेयगुणसमर्पकं प्रसिद्धम् । वाजशब्दार्थमाह—अन्नेति । पेयशब्दार्थमाह—आदीति । ततश्च सुराद्रव्यं लभ्यते । करणभूतमिति । वाजपदेनोक्तमित्यर्थः । फलापूर्वमिति गुरुमते । फलभावनामिति भट्टमते बोध्यम् । एकस्य यागस्य वाजपेयपदवाच्यद्रव्यं प्रति प्राधान्यम् फलभावनां फलापूर्वं वा प्रति गुणत्वम्, एवमुद्देश्यत्वं विधेयत्वं चोद्देश्यत्वाज्ज्ञातत्वं विधेयत्वादज्ञातत्वम्, एवमेतानि परस्परविरुद्धान्येकस्यां प्रतीतौ वाजपेयेन स्वाराज्यकामो यजेतेतिवाक्यजन्यायां प्रसज्येरन्निति हेतोर्नामधेयत्वमेव तस्य वाजपेयशब्दस्य समर्थितं वाजपेयाधिकरण इति शेषः । तथेहापि विरुद्धत्रिकद्वयापत्तिरनिवार्यैवेति योजना । प्राधान्यगुणत्वोद्देश्यत्वविधेयत्वज्ञातत्वाज्ञातत्वानि विरुद्धत्रिकद्वयम् । तस्मादिति । अयं भावः—केवलया भक्त्याऽघ्यघं धुन्वन्तीति वाक्ये यद्यघक्षयं प्रति भक्तिः कारणत्वेन विधीयते भक्तिं प्रति च कैवल्यं विधीयते तदा विरुद्धत्रिकद्वयापत्तिः पूर्वोक्तो वाक्यभेदश्च । अथ कैवल्यविशिष्टा भक्तिः पापक्षये कारणत्वेन विधीयते सोमेन यजेतेति सोमविशिष्टो याग इव फले, तत्र, तथा सति केवलशब्दस्य कैवल्यवाचित्वेन भक्तिसामानाधिकरण्यानुपपत्तेर्मत्वर्थलक्षणा स्यात् कैवल्यवत्या भक्त्येति सोमवता यागेनेतिवत् तस्मादग्नये शुचय इत्यादिवत्केवलया भक्त्येति सामानाधिकरण्याद्विशिष्टमेकं कारकं विधीयते, अतोऽघक्षये भक्तिः पुष्कलं कारणमिति वाक्यार्थोऽग्निः शुचिरिष्यतेतिवत् ।

---

१—वाजपेयाधिकरणे विरुद्धत्रिकद्वयापत्तितो गुणविधिमुपेक्ष्य नामता स्वीकृता, प्रकृतेऽपि पापक्षयं प्रति भक्तेः कारणत्वस्य विधाने भक्तिं प्रति च कैवल्यस्य विधाने साधनस्य साध्यसिद्ध्यङ्गतया शेषस्वरूपं गुणत्वं, कैवल्ये च साध्यत्वेन शेषिस्वरूपं प्राधान्यं भक्तौ वाच्यं, तथा साध्यत्वेन विधेयत्वं, सिद्धत्वेनोद्देश्यत्वम्, एवमज्ञातत्वेनोपादेयत्वं, ज्ञातत्वेनानुवाद्यत्वमिति त्रिकदोषः प्रसज्येतेति भावः ।

ननु तृतीयया साधकतमत्वमभिधीयते तमवर्थश्च सातिशयः स चापेक्षिकः, अपेक्षा च नासति साधकान्तरेऽवकल्पते केवलप्रातिपदिकेन च पौष्कल्यमभिधीयत इति परस्परव्याहतमेतत्, तदयुक्तम्, अतिशयोऽप्यत्र कार्य्यसन्निकर्षोऽभिप्रेतः स च नापेक्षिक एव; अपि त्वनापेक्षिकोऽपि,

तदाहुर्वार्तिककारमिश्राः—

यदेन्द्रियं प्रमाणं स्यात् तस्य चार्थेन संगतिः।
मनसो चेन्द्रियैर्योग आत्मना सर्व एव चेति॥

अत्र चात्मन इन्द्रियार्थपर्यन्तानामापेक्षिकं साधकतमत्वं, सर्व्व एव चेत्यत्र त्वनापेक्षिकम्, अवधि—भूतस्य साधनान्तरस्याभावात्, तत्राप्यापेक्षिकत्वे कथं चित्सन्निकर्षस्यापि संभवाद् अनापेक्षिक एव मुख्यः सन्निकर्षः स एव चौत्सर्गिकस्तृतीयार्थः, साधनान्तरेषु तु प्रमाणान्तरैकगस्थापितेषु तत्तदापेक्षिकोऽपि स्वीक्रियते, अत इह कार्यमत्यासन्नत्वमनापेक्षिकमेव मुख्यवृत्त्या तृतीययाऽभिधीयते, ततश्च सिद्धमेव पौष्कल्यं स्वप्रार्थमनूद्यते केवलयेति न व्याघातः, न चैकस्यानन्यादिभिरन्वितः सोमस्य इव भगवा कैवल्येन चान्वितस्येति विधूननमेव प्रतीयते परस्परान्वयस्तु तयोः पार्ष्णिक इति दत्तऽयम्,

अथधूननस्य फलस्योद्दिश्यमानत्वेन विधेयत्वानुपपत्तेः, तस्मादस्मद्गुरुरीय यागोपुनिर्वरीयसी, तस्मान्निरपेक्षमेव भगवन्नामकीर्तनं पापक्षयहेतुर्नान्यापेक्षं न चान्यसापेक्षमिति।

शङ्कते—नन्विति। आपेक्षिक इति। साधकान्तरापेक्षयाऽतिशयितं साधकं साधकतममुच्यते साधकान्तराभावे किमपेक्ष्य साधकतमं स्याद् अतस्तृतीयाबलादापेक्षिकत्वं प्रतीयते केवलप्रातिपदिकेन च तदभावः प्रतीयत इति विरोध इति भावः। परिहरति—तदयुक्तमिति। अत्रेति तृतीयाऽर्थे निर्धारणे सप्तमी तृतीयाऽर्थमध्ये योऽतिशयः स कार्यसंनिकर्षोऽव्यवधानरूपोऽभिमत इत्यर्थः। कार्यसंनिकर्षरूपोऽतिशयः साधकान्तरमपेक्ष्यैव भवतीति न नियमः किन्तु तदनपेक्ष्यापि भवति। तदेतद्वृद्धाचार्यसंमत्या दर्शयति—तदाहुरिति। प्रमाणं साधकतमं तच्चेन्द्रियमिन्द्रियार्थसंयोगो वेन्द्रियमनःसंयोगो वाऽऽत्ममनःसंयोगो वा सर्वे वेति कारिका र्थः। यदेन्द्रियसंनिकर्षः प्रमाणं तदैकैकस्य सापेक्षत्वम्, एवं च तस्य तस्य प्रमासाधकतमत्वं तत्तत्साधकान्तरमपेक्ष्यैव भवति। सर्वेषां प्रमाणत्वे सर्वेषां समुदितत्वात्साधकान्तराभावादनापेक्षिकं साधकत्वम्। अत्रभिभूतस्येति। अपेक्ष्यमाणस्येत्यर्थः। अत्र सर्वेषां प्रमाणत्वेऽपि समुदितानां प्रमाणत्वं न प्रत्येकं परिसमाप्तं तथा सति प्रमाणभेदे प्रमाभेदापत्तेः, ततश्च प्रत्येकं यानि प्रमासाधकानि तदपेक्षया समुदितानां साधकतमत्वमिति तदप्यापेक्षिकम्, एवं च नानापेक्षिकः कुत्राप्यतिशयः, अत एव तत्राप्यापेक्षिकत्व इत्यादिः प्रौढिवादस्तथाऽपि केवलया भक्त्येत्यत्र न विरोधः। भक्त्येति तृतीयया साधकतमत्वमुक्तं केवलशब्देन च पौष्कल्यमुक्तं, तच्च यदनन्तरं कार्यमवश्यमात्मानं लभते तत्त्वं, त तच्च पापक्षये प्रतियोगितया साधकीभूतपापाद्यपेक्षया भक्तेः साधकतमत्वेऽपि कथं चिद्विप्रकर्षस्यापि संभावितत्वात्तन्निवृत्त्यर्थं केवलयेति पदं ततश्च नायमनुवादः। तत्रापीति। तयोरापेक्षिकानापेक्षिकयोरपि मध्येऽनापेक्षिक एव मुख्यः सन्निकर्ष इत्यन्वयः। अत्र हेतुरापेक्षिकत्वे कथं चिद्विप्रकर्षस्यापि संभावितत्वादित्यर्थः। औत्सर्गिक इति। सर्वविषयत्वमुत्सर्गस्तत्सिद्ध इत्यर्थः। अपेक्षायां कारणमाह—साधनान्तरेष्विति। यथेन्द्रियस्य प्रमाणत्वपक्षे। प्रकृत आह—अत इहेति। प्रत्यासत्तौ। हेतुमाह—मुक्तेति। प्रग्रहः=प्रतिबन्धः। उपसंहरति अतश्चेति। नन्वरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यादावारुण्यादिविशिष्टक्रयविधानवत्केवलया भक्त्येत्यादिवाक्येऽपि कैवल्यविशिष्टया भक्त्याऽघधूननविधानमस्त्वित्याशङ्क्याह—न चेति। तयोर्भक्तिकैवल्ययोरु-
[illegible] पार्ष्णिकः पृष्ठतः स्थितः पश्चान्नत इत्यर्थः। इति न न

यक्तव्यमिति सम्बन्धः। तत्र हेतुरघविधूननस्येति। याचोयुक्तिर्वा-प्रयोगः। परमप्रकृतमुपसंहरति—तस्मादिति। अन्यशब्देन मन्वायुक्तप्रायश्चित्तम्।

यत्तूक्तं पुराणवचनैरेवाङ्गत्वमवगम्यत इति, तद्युक्तं, प्रायश्चित्तानि चीर्णानीत्यस्यायमर्थः—प्रायश्चित्तानि न निष्पुनन्ति न सम्यक् पुनन्तीति, सम्यक्त्वं चात्र वासनापरिक्षयः स च न कर्म्मसाध्यः तानि हि नारायणपराङ्मुखमधिकुर्व्वन्ति तस्य चकथं वासनाविध्वंसं विदध्युः, तस्य भक्तिज्ञानैकसाध्यत्वाद्, यस्तु नारायणप्रवणः स कर्म्मात्मकेषु प्रायश्चित्तेषु न प्रवर्त्तत एव, एवं च पापक्षयं कुर्व्वतामेव प्रायश्चित्तानां तद्वासनाक्षयहेतुत्वं निवार्य्यते। न चैवं सति; मन्वादिवचनविरोधो न वा विशेषणानर्थक्यं, हेतुत्वेनोपयोगाद्, इदमेव च स्पष्टीकृतं कर्मणा कर्मनिर्हार इति, न हि तस्य कर्म्मणा कर्म्मनिर्हारो नास्तीत्यर्थोऽपि तु नात्यन्तिक इति, आत्यन्तिकत्वं च सह वासनाभिः परिक्षय इति, अविद्वदधिकारत्वादिति हेतुत्वमेव प्रकटयति, अधिक्रियतेऽस्मिन् पुरुष इत्यधिकारः, अविदुषोऽधिकारोऽविद्वदधिकारस्तस्य भावस्तस्माद्, भगवत्पराङ्मुखविषयत्वात्प्रायश्चित्तानामित्यर्थः। विमर्शनमिति च ब्रह्मविद्या दृष्टान्तत्वेनानूद्यते न विधीयते, भक्तेरेव प्राकरणिकत्वात्, तथा

क्वचिन्निवर्त्ततेऽभद्रात्क्वचिच्चरति तत्पुनः।
प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवदिति

सतीषु पापवासनासु पापप्रवृत्तेरवश्यंभावात् "प्रायश्चित्तमनर्थकमि"ति ब्रुवतेदमेवोपजीव्यते,

पुराणवचनैः

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ।
न निष्पुनन्ति राजेन्द्र सुराभाण्डमिवापगा—

इत्यादिभिः । न निष्पुनन्ति निष्कर्षेण न पुनन्ति निष्कर्षश्च सजातीयारम्भकपापसंस्कारक्षय इत्यभिप्रायेणाह—न सम्यगिति । वाक्यार्थमाह—स चेति । नारायणपराङ्मुखमिति विशेषणस्य तात्पर्यमाह-तानि हीति । तानि प्रायश्चित्तानि, तस्य नारायणपराङ्मुखस्य, विदध्युः कुर्युः, तस्य वासनाध्वंसस्य । भक्त्या नामोच्चारणादिरूपया जन्यं यज्ज्ञानं तदेकसाध्यत्वाद् भक्त्येकसाध्यत्वादिति वक्तव्ये ज्ञानग्रहणम् भक्तौ सत्यां ज्ञानस्यानुषङ्गिकत्वेनावश्यकत्वाद्, भक्त्येकसाध्यस्य वासनाक्षयस्य,

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः ।
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवये—

त्यादिबहुवाक्यैरवगम्यते, कर्मात्मकप्रायश्चित्तेषु नारायणपराङ्मुखाधिकारिकत्वे फलितमाह—यस्त्विति । अनधिकारित्वादिति भावः । फलितं वाक्यार्थमाह—एवञ्चेति । पापक्षयं कुर्वताम् प्रायश्चित्तानामित्युक्तेः फलितमाह—न चैवमिति । वासनाक्षयहेतुत्वं निवार्यत—इत्युक्तेः फलितमाह—न वेति । अन्यथा प्रायश्चित्तानि चीर्णानीत्यादिवाक्ये नारायणपराङ्मुखमिति विशेषणमनर्थकं स्यादिति भावः । हेतुत्वेनेति । कर्मात्मकप्रायश्चित्तानाम् पापवासनाक्षयहेतुत्वनिवारणे न निष्पुनन्तीत्यनेनोक्ते नारायणपराङ्मुखमिति विशेषणस्य हेतुत्वेनोपयोगादित्यर्थः । हेतुत्वेनोपयोगश्च तस्य च कथमित्यादिपूर्वग्रन्थ उपपादितः । ननु किमिति मन्वादिवचनानामविशेषप्रवृत्तानां—नारायणपराङ्मुखाधिकारित्वेन संकोचः क्रियते, न च विशेषणानर्थक्यं, नारायणपराङ्मुखस्य वासनाक्षयं न कुर्वन्तीतरस्य तु तं—कुर्वन्तीति तत्सार्थक्यादित्याशङ्क्य,

कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम्—

त्येतद्भागवतवचनेन समाधत्ते—इदमेव चेति । कर्मणा प्रायश्चित्तेन कर्मनिर्हारः पापध्वंसः । हेतुत्वमिति । इदमेव नारायणपराङ्मुखमितिविशेषणमुचितमेवेत्यर्थः । अविद्वदधिकारि

त्यस्य विग्रहमाह—अधिक्रियत इति। अचित्तशब्दार्थमाह—भगवत्पराङ्मुखेति। प्रायश्चित्तं विमर्शनमित्यस्यार्थमाह—विमर्शनमिति। विद्येति प्रथमान्तम्। प्राकरणिकत्वादिति। प्रकरणप्रतिपाद्यत्वादित्यर्थः। ब्रह्मविद्या ह्यविद्यानिवृत्तिद्वारा सर्वसंसारनिवर्तिकेति दृष्टान्तत्वेनानूद्यते न विधीयते प्रकरणविरोधापत्तेरिति भावः। यद्वा नकारो मध्यमणिन्यायेनोभयत्र सम्बन्धनीयः ब्रह्मविद्या नानूद्यते न विधीयते भक्तेरेव प्राकरणिकत्वात्सैव विमर्शनशब्देनोच्यत इति भावः। कर्मात्मकप्रायश्चित्तस्य सजातीयारम्भकपापसंस्कारनिवर्तकत्वाभावे संमत्यन्तरमाह—तथेति। अभद्रात्पापात्। वाक्यार्थमाह—सतीष्विति। प्रथता वाक्येन, इदमेव = प्रायश्चित्तस्य पापसंस्कारानिवर्तकत्वमेव,

तथा

नैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः।
नाधर्म्मजं तद्धृदयं तदपीशाङ्घ्रिसेवये—

त्येनदपि संवादकं, यस्मिन् यस्मिन्निमित्ते यद्यत्प्रायश्चित्तं विहितं तपोदानव्रतादि च तैः प्रायश्चित्तैस्तान्यघान्येव पूयन्ते नश्यन्ति; न पुनरधर्म्मजम् अधर्म्मेभ्यो जातम्, अन्यैपुग्रहणाड्डः। ततश्च तत्तत्संस्कारविशिष्टमयोत्पन्नं हृदयम्, ईशाङ्घ्रिसेवया तु तदपि पूयते, अपिशब्दान्न केवलमघानि नश्यन्ति; अपि तु तत्संस्कारा—अपीति। ईशाङ्घ्रिसेवा चात्र न चतुर्थी पादसेवनलक्षणा भक्तिर्विवद्यते; किं तर्हि कीर्त्तनलक्षणा तदधिकारत्वात्, तथा हि सेवा भजनं भक्तिरिति पर्य्यायाः, सा चात्र

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनमि-

ति नवधा भिद्यते, सा च प्रत्येकं कृत्स्नपापक्षयहेतुः तत्तन्माहात्म्यप्रतिपादकवचनानां पुराणेषु भूयस्त्वाद्

इह तु कीर्त्तनस्यैव सेतिहासमाप्रकरणपरिसमाप्तेः प्रतिपादनात् कीर्त्तनलक्षणोपादीयते।

भक्तेः पापवासनानिवर्त्तकत्वे संमत्यन्तरमाह—तथेति। वाक्यार्थमाह—यस्मिन्निति। न चाधर्मजमित्यसाधुः प्रयोगः, सप्तम्यन्त—उपपदे जनेर्धातोर्डप्रत्ययविधानाद्, यथा कुलजमिति, पञ्चम्यन्ते, तूपपदे जातिव्यतिरिक्तवाचिनि डप्रत्ययविधानाद् यथा तज्जमिति, अधर्मशब्दस्य जातिवाचित्वाड्डप्रत्ययानुपपत्तेस्तत्राह—अन्येष्विति। "अन्येष्वपि दृश्यते" ३।२।१०१। इति दृशिधातुग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्सर्वप्रयोजनकत्वात्केवलादपि सप्तम्यन्तोपपदाभावेऽजातिवाचिपञ्चम्यन्तोपपदाभावेऽपि जनेर्डप्रत्ययः। अधर्मजत्वं हृदयस्य कथं? पूर्वनिष्पन्नत्वात्तत्राह—ततश्चेति। तद् हृदयं—संस्कारविशिष्टतयोत्पन्नं,—श्लोकस्य चतुर्थचरणं व्याचष्टे—ईशेति। नन्वीशाङ्घ्रिसेवनस्य पापसंस्कारनिवर्त्तकत्वेऽपि किमायातं कीर्तनस्य तत्राह—ईशाङ्घ्रिसेवा चेति। अत्र = श्लोके। चतुर्थी वक्ष्यमाणश्लोके। तदेवाह—तथा हीति। इह त्विति। तैस्तान्यघानि पूयन्त—इत्यादिश्लोके। सेतिहासमिति। अजामिलोपाख्यान इत्यर्थः।

अथ वा सर्व्वप्रकाराऽपि भक्तिरत्र प्रकरणिनी केवलया भक्त्येत्यविशेषेण प्रक्रमात् कीर्त्तनवदन्येषामपि शृङ्गग्राहिकया पापक्षयहेतुत्वप्रतिपादनाच्च, तत्र

सकृन्मनः कृष्णपदारविन्दयो-
र्निवेशितं तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृता-

इति स्मरणस्य; तदपीशाङ्घ्रिसेवयेति पादसेवनस्य; यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवयेत्यात्मनिवेदनस्य भगवज्जनसेवायाश्च; तस्या अपि मुख्यभगवद्भक्तित्वात सर्वपुराणेषु पुनः पुनरत्यादरेण मद्भक्तजनवात्सल्यमित्यादिभिर्विधीयमानत्वात्.

जिह्वा न वक्ति भगवद्गुणनामधेयं-
चेतश्च न स्मरति तच्चरणारविन्दम्।
कृष्णाय नो नमति यच्छिर एकदाऽपि
तानानयध्वमसतोऽकृतविष्णुकृत्यान्॥

इति तु यमवाक्यं नवविधाया अपि, तथा हि यदिति व्यस्तमव्ययम्, अन्यथा यच्छिर इति समासे जिह्वाचेतःशब्दाभ्यां सम्बध्यमानस्य यच्छब्दस्यादःसापेक्षत्वेनासामर्थ्यप्रसङ्गाद्, विष्णुकृत्यमिति च कीर्त्तनस्मरणवन्दनेभ्योऽवशिष्टं श्रवणादिषट्कं गृह्यते गोबलीवर्दन्यायेन, न कृतं विष्णुकृत्यं यैस्तेऽकृतविष्णुकृत्यास्तानानयध्वमिति नवविधभक्तिहीनानामानयनप्रतिपादनेनैकैकभक्तियुक्तानामनानयनं प्रतीयते, एकाङ्गवैकल्येन प्रत्युदाहरणनियमात्, तत्रापि "वैवस्वतं संगमनं जनानामि"तिश्रुत्याऽऽनयनस्योत्सर्गतः प्राप्तत्वाद्, भक्तानामनानयनमेव विधीयते, अप्राप्तत्वात्, ततश्च नवविधाया भक्तेरैकैकश्येन कृत्स्नपापक्षयहेतुत्वमिति भावः। श्रवणादीनां तु माहात्म्यं स्वस्वप्रकरणे विशेषतोऽवगन्तव्यम्; प्रसङ्गागतं चैतत्, प्रस्तुतं पुनरधर्म्मवासनानिवृत्तिहेतुत्वं भक्तेरेव न कर्म्मणामिति।

मुख्यं पक्षमाह—अथ वेति। सर्वप्रकारा नवविधेत्यर्थः। अन्येषामिति। *श्रवणादीनामित्यर्थः। शृङ्गग्राहिकयेति। यथा गोविशेषः शृङ्गे गृहीत्वा प्रदर्श्यते;* एवं श्रवणादीनां प्रत्येकं पापक्षयहेतुत्वं—प्रतिपाद्यत इत्यर्थः। तदेवाह—तत्रेति। श्रवणादिषु मध्ये। तद्गुणेति। कृष्णगुणानुरागि मन इत्यर्थः। चीर्णेति। चीर्णं कृतं निष्कृतं प्रायश्चित्तं कृष्णचरणारविन्दस्मरणरूपं यैस्त इत्यर्थः। स्मरणस्येति। पापक्षयहेतुत्वप्रतिपादनादित्यनुषङ्गः। एवं पादसेवनस्यात्मनिवेदनस्य भगवज्जसेवायाश्च नवविधाया अपीत्येषु पदेष्वयमेवानुषङ्गः।

कृष्णार्पितप्राण इत्यात्मनिवेदनोक्तिः। तत्पुरुषनिषेवयेति भगवज्जनसेवोक्तिः। भगवद्भक्तिप्रस्तावे किमर्थं भगवज्जनसेवोदाह्रियते? तत्राह—तस्या अपीति। तत्र हेतुमाह–सर्वेति। मद्भक्तजनवात्सल्यं–नवविधाया अपि भक्तेरित्यर्थः, पापक्षयहेतुत्वप्रतिपादनादित्यनुषङ्गः पूर्वमेवोक्तः। कथमत्र नवविधाया भक्तेः पापक्षयहेतुत्वं प्रतीयते? तत्राह—तथा हीति। व्यस्तं पृथक् पदं येषामित्यर्थे, अदःसापेक्षत्वेनेत्यर्थः, जिह्वाऽऽदिसापेक्षत्वेनेत्यर्थः, असामर्थ्यप्रसङ्गादिति। निरपेक्षत्वं हि सामर्थ्यं, स[1]मर्थश्च पदविधिः, अतः समासो न स्यादित्यर्थः। गोवलीवर्दन्यायेनेति। यथा-गोपदं बलीवर्दपदसहोच्चरितं तदितरपरं तथा विष्णुकृत्यपदं कीर्त्तनादिसहोच्चरितं तदितरपरमित्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह—इतिनवविधेति एकाङ्गवैकल्येनेति। एकमङ्गविशेषणं तस्य वैकल्यमभावस्तेन। प्रतिकूलमुदाहरणम् प्रत्युदाहरणं, यथाऽरुणयैकहायन्या क्रीणातीत्युदाहृते शुक्लयैकहायन्याऽप्यनेकहायन्याऽरुणयाऽपि न क्रीणातीति गम्यते, एवं नवविधभक्तिहीनानामानयनप्रतिपादनेनैकभक्तिमतामनानयनं प्रतीयते। एवं भक्तानामनानयनस्यार्थिकत्वमुक्त्वा संप्रति तस्यैव विधेयत्वमाह—तत्रापीति। अनानयनस्यार्थिकत्वेऽपीत्यर्थः। वैवस्वतं यमम्। सङ्गमनम् नेतारम्। फलितमाह–ततश्चेति। उपपत्त्यन्तरमाह–श्रवणादीनामिति। पुराणेष्विति भावः। प्रसङ्गेति। एतत् श्रवणादीनाम् पापक्षयहेतुत्वम् प्रसङ्गागतमित्यर्थः। यस्य प्रसङ्गागतं तन्निर्दिशति–प्रस्तुतमिति। नामकीर्तनस्य प्रायश्चित्ताङ्गत्वशङ्कानिरासाय प्रायश्चित्तानि चीर्णानीत्यादि वाक्यार्थत्वेन प्रस्तुमित्यर्थः।

**ननु कोऽयमधर्म्मो नाम यद्वासनानां निवृत्तये न प्रभवन्ति कर्म्माणि? किं हननादि कर्म्मैव, किं वा तज्जन्यः संस्कारः, किं वाऽन्यः, न तावत् कर्म तस्य स्वयमेव निवृत्तत्वात् तादर्थ्येन प्रायश्चित्तविधानानुपपत्तेः, अथ संस्कारः न तज्जन्यामन्यां वासनामङ्गीकुर्म्मः**

१—सामर्थ्यं चात्रैकार्थीभावरूपं ग्राह्यं, "समर्थः पदविधि"रिति महाभाष्ये भगवत्पतञ्जलिनोक्तेः, निरूप्यनिरूपकभावापन्नविषयताप्रयोजकोपस्थिति—जनकत्वात्मकं पर्यवस्यति, तथा चात्र षष्ठ्यन्तस्य समस्तत्वे तद्धर्म्यान्यप्रान्त्रयो— संभवो स्याद् वृत्तत्वाद्, वृत्तस्य विशेषणयोगासंभवादित्यर्थः

संस्कारस्य संस्कारान्तरायोगादनवस्थाप्रसङ्गाद्, न वाऽन्यः प्रमाणाभावाद्,

यदाहुर्वार्तिककारमिश्राः—

तस्मात्फलप्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वाऽपि पश्वादेरपूर्वं न ततः पृथगि-

ति, शक्तिमात्रमिति च यागादिजन्यः संस्कार एवो-च्यते, शक्तिमन्तमन्तरेण मुख्यशक्तेरवस्थानायोगाद्, उत्पत्तौ वाऽपि पश्वादेः शक्तिमात्रत्वमित्यपि फलस्य पूर्वावस्था, यथोक्तं निबन्धकृद्भिः "फलस्य चाङ्कुराव-स्थे"ति । सा च यागादिजन्यः संस्कार एव, धर्म्मवदेवा-धर्म्मः, तथा चाधर्म्मवासनात्रयो नाम न कश्चिद्, इदम-पेशलम् , जात्यन्तरमेव धर्म्माधर्म्मौ न संस्कारजातीयौ, अभियुक्तैर्भेदेनानुक्रान्तत्वात्, तत्र च क्रियाज्ञानयोरेव संस्कार इति तार्किकाः । वयन्तु सर्वेषामेव संस्कारव्य-तिरिक्तानां विनश्यतां सोऽस्तीति ब्रूमः, विनश्यच्चेनै-वानुमातुं शक्यत्वात् ,

श्रीविष्णुपुराणे चैतदेव स्पष्टीकृतं-

हिंसाऽहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचत-

इति तैर्हिंसाऽऽदिभिर्भाविता वासितास्तान्येव प्रति-पद्यन्ते, न चात्र धर्म्माधर्म्मशब्दाभ्यां विहितप्रतिषिद्धयोः क्रिययोरुपादानं तयोः पृथगेव हिंसाऽऽदिशब्दैरुपात्तत्वात्। यद्यपि मुख्यवृत्त्याऽग्निहोत्रहननक्रिययोरेवार्थानर्थहेतुत्वेन धर्माधर्मशब्दवाच्यत्वं तथाऽपि यद्द्वारेण तयोरर्थानर्थहे-तुत्वं तदेवापूर्वं प्रायेण धर्म्माधर्म्मशब्दाभ्यां शास्त्रेषु व्यवह्रियते ।

भक्तेरधर्मवासनानिवृत्तिहेतुत्वमाक्षिपति—नन्विति । वार्त्तिककारमिश्राः = भट्टाचार्याः। पूर्वार्द्धेन यागादेरुत्तरावस्थाऽपूर्वमुत्तरार्द्धेन पश्वादिफलस्य पूर्वावस्थाऽपूर्वमुच्यते। तत इति। शक्तेरित्यर्थः। ननु शक्तिमात्रकमित्यन्यपक्ष एव दृश्यते तत्राह—शक्तिमात्रमिति। मुख्यशक्तिरेव शक्तिशब्दवाच्या, संस्कारस्तु लाक्षणिकः किमर्थं परिपरिगृह्यते तत्राह—शक्तिमन्तर्मिति । यागमित्यर्थः। उत्तरार्द्धस्य तात्पर्यमाह-उत्पत्ताविति। पूर्वावस्थापदार्थमाह—सा चेति। नन्वेतदर्मं सिद्धं किं तावता प्रकृतेऽत आह-धर्मवदिति। उपसंहरति-तथा चेति। ततश्च नासौ भक्तिसाध्य इति भावः। दूषयति-इदमिति। अभियुक्तैरन्नपादप्रभृतिभिः। ननु तथाऽपि कथमधर्मसंस्कारः क्रियाज्ञानयोरेव संस्कारजनकत्वात्तत्राह—तत्र चेति। विनश्यत्त्वेनेति। विमतं, संस्कारजनकं, संस्कारभिन्नत्वे सति विनश्यत्वात्क्रियाज्ञानवदिति। तत्रैव स्मृतिं प्रमाणयति -श्रीविष्णुपुराण इति। श्लोकं व्याचष्टे-तैरिति। वासिताः संस्कृतास्तान्येवेति हिंसाऽहिंसे मृदुक्रूरे धर्माधर्मावृतावृते इत्यर्थः। ऋतम् सत्यम्। अतश्च न क्रियाज्ञानयोरेव संस्कारजनकत्वं,हिंसाऽऽदीनामपि संस्कारजनकत्वाम्नानात्। जात्यन्तरभूतधर्माधर्मयोरपि संस्कारजनकत्वमेतद्वचनेनैव सिद्ध्यतीत्याह—न चेति। ननु धर्माधर्मशब्दयोर्होमहिंसाऽऽदिक्रियास्वपि प्रयोगो दृश्यतेऽतआह-यद्यपीति।

वार्त्तिककाराणामपि स्वर्गयागयोरन्तराले किञ्चिदतीन्द्रियं तयोरेव साध्यसाधनसंबन्धनिर्वाहकं वस्तु श्रुतार्थापत्तिप्रमेयमपूर्वन्नाम न परपरिकल्पितं कार्य्यनियोगापरपर्य्यायशब्दैकसमधिगम्यं किञ्चिदिति मनीषितं न पुनः संस्कार एव। मण्डनमिश्रैरप्ययमेवार्थोऽङ्गीकृतः प्रारब्धक्रियैव जीवन्मुक्तिं समर्थयद्भिः। अथ याऽग्निहोत्रहननादिक्रियाणां विहितप्रतिषिद्धत्वनिबन्धनः स्वर्गनरकहेतुरेकः संस्कारः श्रुतार्थापत्तिप्रमेयः तासामेवान्योऽपि सजातीयोत्पत्तिहेतुः क्रियानिबन्धनोऽनुमेयः, यथा योगिशैववैष्णवशिवलिङ्गशालिग्रामादिदर्शनस्य पुरुषार्थ-

हेतुरतिशयः शास्त्रसमधिगम्यः कश्चिदस्ति, पापण्डिचाण्डालादिदर्शनस्य पुनरनर्थहेतुः, तयोरेवानुभवनिमित्तः स्मृतिहेतुरन्योऽपि। अस्मिंश्च विभागे

नैकान्तिकं तद्धि कृतेऽपि निष्कृते
मनः पुनर्धावति चेदसत्पथे।
तत्कर्म्मनिर्हारमभीप्सतो हरे-
र्गुणानुवादः खलु सत्त्वभावन-

इत्येवंजातीयकं वचनजातं प्रमाणं, तथा हि न तावत्सजातीयोत्पादकः संस्कारो नास्त्येवेति वक्तुं शक्यते

यः सकृत्पातकं कुर्य्यात् कुर्य्यादेनस्ततोऽपरमित्यादि श्रुतेः,

तेषां ये यानि कर्म्माणि प्राक् सृष्ट्यां प्रतिपेदिरे।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनरि—

त्यादिस्मृतेश्च,स्वर्गनरकसृष्टाविव पुण्यपापसृष्टावप्यविषमस्य कृपालोः परमेश्वरस्य प्राचीनपुण्यपापसापेक्षत्वाच्च परमसिद्धान्तेऽप्यनपाकृत्यैव सापेक्षत्वं सृष्टेर्मायामयत्वेन वैषम्यदोषसमाधानाच्च।

कथं तर्हि वार्त्तिककारैः संस्काररूपत्वमुक्तं धर्मस्य तत्राह—वार्त्तिकेति। वार्त्तिककाराणामपीति। मनीषितमित्यन्वयः। वार्त्तिकस्थं शक्तिपदं व्याचष्टे-किंचिदतीन्द्रियमिति। क्षणभङ्गुरस्य यागादेः कालान्तरभाविफलजनकत्वानुपपत्तिः श्रुतार्थापत्तिः। परेति। परिपरिकल्पितं स्वीकृतमित्यर्थः। शब्दो लिङादिः। न पुनः संस्कार एव, अपूर्वमित्यनुषङ्गः। शास्त्रकाराणां प्रायेण जात्यन्तर एव धर्माधर्मशब्दप्रयोगादिति भावः। ननु मण्डनमिश्रादिभिर्वेदान्तविद्भिः संस्कारमादाय जीवन्मुक्तिसमर्थनं क्रियते, सर्वसंस्कारो धर्माधर्मशब्दवाच्य एव, अन्यथा तस्य सुखदुःखभोगानुपपत्तेस्तत्राह-मण्डनेति। अयमेव जात्यन्तरभूतौ धर्माधर्मौ इत्ययमेवेत्यर्थः। संस्कारशब्देन चाज्ञानले-

शक्तिरिति भावः। प्रारब्धक्रिययेति। धर्माधर्मरूपेण प्रारब्धेनेत्यर्थः। प्रकारान्तरमाह—अथ चेति। श्रुतार्थापत्तिरिति। क्षणभङ्गुरायाः क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्तिगम्य इत्यर्थः। अनुमेय इति। विमता यागादिक्रिया सजातीयोत्पादकसंस्कारहेतुः क्रियात्वाद्वेदनादिक्रियावदिति। एकस्याः क्रियाया द्विविधं संस्काररूपातिशयजनकत्वमुक्तं तत्र दृष्टान्तमाह—यथेति। योगिनश्च शैवाश्च वैष्णवाश्च शिवलिङ्गं च शालग्रामादश्च तेषां दर्शनस्येत्यर्थः। पुरुषार्थधर्महेतुरतिशयो धर्माख्यः। चण्डालादीत्यादिशब्देन चैत्यादि। अनर्थहेतुः पापाख्यः। तयारेवेति। योग्यादिपाषण्डादिदर्शनयोरित्यर्थः। अतः परमेश्वरभक्तेर्निषिद्धक्रियाजन्यस्य नरकहेतोः संस्कारस्य निवर्त्तकत्वमित्युपसंहारो द्रष्टव्यः। तत्रैव प्रमाणान्तरमाह—असिश्चेति। तद्धि निष्कृतं नैकान्तिकं न सर्वात्मना पापनिवर्त्तकं, तत्र हेतुः कृतेऽपि निष्कृतेऽसत्पथे मनः पुनर्धावति, चेच्छब्दो यत इत्यस्यार्थे, तत्तस्मात्कर्मणो निर्हारः, आत्यन्तिको नाशस्तमभीप्सत इच्छतः पुंसो हरेर्गुणानुवाद ऐकान्तिक इत्यनुषङ्गः। यतः सत्त्वभावनः सत्त्वशोधक इति श्लोकार्थः। सजातीयोत्पादकसंस्कारं प्रमाणतः साधयति—तथा हीति। तेषां सृज्यमानानां मध्ये सृष्ट्यां जन्मनि ये सृज्यमानाः तान्येव कर्माणि प्रतिपद्यन्ते संस्कारवशादिति भावः। तत्रैव युक्तिमाह—स्वर्गेति। ईश्वरो हि कं चित्पुण्ये प्रवर्त्तयति कं चित्पातके तत्र पूर्वसंस्कारमपेक्षते, अन्यथा वैषम्यमेव स्याद्, न च तत्संभवति परमकृपालुत्वादिति भावः। परमसिद्धान्त इति। [1]वेदान्तिसिद्धान्त इत्यर्थः। सृष्टेर्मायामयत्वेऽपीश्वरस्य वैषम्यं प्रसज्यते प्रतिपुरुषं सुखदुःखवैचित्र्यजननात्तद्वैषम्यं प्राचीनसंस्कारादिसापेक्षत्वमवलम्ब्यैव समाहितमिति भावः।

यदि परं स्वर्गनरकहेतुरेव सजातीयोत्पादकोऽपीति वक्तव्यं; तथा च सति

---

1—अयमभिप्रायः—सृज्यमानशरीरिकर्मसापेक्षतया भगवतो न वैषम्यादिदोषः, एतदेव "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति" १।२।३४।इत्युत्तरमीमांसासूत्रेण सिद्धान्तितम्, "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने"ति भगवती श्रुतिः, "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि"ति भगवद्वाक्यं—चैनमर्थमुपोद्बलयतः।

विद्यातपःप्राणनिरोधमैत्री—
तीर्थाभिषेकव्रतदानजप्यैः।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा
यथा हृदिस्थे भगवत्यनन्ते—

इत्यादिना वेदाभ्यासजपोपासनादिस्वाध्यायैः शुद्धेरनात्यन्तिकत्वाभिधानं नावकल्पेत; निरंशस्य संस्कारस्य सान्वयविनाशायोगात्, तस्मात्स्वर्गनरकहेतुः सजातीयोत्पत्तिहेतुश्चेति संस्कारद्वयं कर्मणामवश्यमभ्युपगन्तव्यं ततश्च नरकहेतुः संस्कारः प्रायश्चित्तैर्निवर्त्यते न सजातीयोत्पादकः, भक्त्या पुनरुभयविधोऽपीति भक्तेरेवात्यन्तिकशुद्धिहेतुत्वं न कर्म्मणामिति, अतश्च प्रायश्चित्तानि चीर्णानीत्येतदप्यनात्यन्तिकतया कर्मात्मकानि प्रायश्चित्तानि विनिन्द्य प्रकरणिनीमत्यन्तपावनीं भगवद्भक्तिमेव प्रशंसति। यत्पुनः सर्व्वकर्म्मसाद्गुण्यार्थत्वमिति, तदविरुद्धं, दध्यादिवदुभयार्थत्वोपपत्तेः, यथा दध्ना जुहोति दध्नेन्द्रियकामस्य जुहोतीत्यादिशास्त्रात् क्रत्वर्थत्वं पुरुषार्थत्वं च दध्यादिस्वरूपस्य; तथेहापि, "वासुदेवे मनो यस्ये" ति तु गुणफलाधिकारः, फलश्रवणाद्। न च पर्णमयीत्वादिवत् फलश्रुतेरर्थवादत्वं, स्मरणस्य भावार्थत्वेन स्वतः फलसाधनतोपपत्तेः पर्णतावैषम्यात्, तस्मादन्याङ्गत्वे प्रमाणाभावात् स्वातन्त्र्येण च सर्व्वपुराणानां गतिसामान्यात् स्वप्रधानमेव भगवत्कीर्त्तनं कृत्स्नपापक्षयहेतुरिति स्थितम्।

श्रीरामेति जनार्द्दनेति जगतां नाथेति नारायणे-
त्यानन्देति दयापरेति कमलाकान्तेति कृष्णेति च।

श्रीमन्नाममहामृताब्धिलहरीकल्लोलमग्नं मुहु-
र्मुह्यन्तं गलदश्रुनेत्रमवशं मां नाथ नित्यं कुरु ॥

इति श्रीमदनन्तानन्दरघुनाथपादपद्मोपजीविनोलक्ष्मी-
धरस्य कृतौ श्रीभगवन्नामकौमुद्यां नामकीर्तनस्य
पुरुषार्थत्वप्रतिपादनं नाम द्वितीयः परिच्छेदः ।

---

नरकहेतुसंस्कार एव सजातीयोत्पादकोऽस्तु किमिति संस्कारद्वयमित्याशङ्क्य समाधत्ते—तथा सतीति। विद्या देवतान्तरोपासना तपः कृच्छ्रादि, प्राणनिरोधः प्राणायामः, तीर्थाभिषेकस्तीर्थे स्नानम्, अनात्यन्तिकत्वाभिधानं हि सजातीयोत्पादकसंस्कारसत्त्वादिति भावः। एक एव संस्कारः सांशोऽस्तु तत्र प्रायश्चित्तेनैकांशो नश्यत्वंशान्तरं तु सजातीयारम्भकमस्तु तत्राह—निरंशत्वेनेति । उपसंहरति–तस्मादिति। परमप्रकृत मुपसंहरति-अत इति । ननु मन्त्रतस्तन्त्रतश्छिद्रमित्यादिवाक्यैरङ्गत्वं नामकीर्तनस्येत्युक्तं तत्राह—यत्पुनरिति।वासुदेवे मनो यस्येत्यादि तु न कर्माङ्गत्वं बोधयतीत्याह–वासुदेव इति।अधिकारः सम्बन्धः फलश्रवणादिति। तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलमिति। ततश्च जपहोमार्चनादिषु वासुदेवस्मरणम् महाफलहेतुरित्यभिप्रायः। नन्वङ्गे फलश्रुतिरर्थवाद इत्याशङ्क्य पूर्वोक्तं स्मारयति–न चेति। भावार्थत्वेन धात्वर्थत्वेन। द्वितीयपरिच्छेदार्थमुपसंहरति–तस्मादिति। गतिसामान्यात्समानार्थत्वात्। नाम्नि कृतनिश्चयो ग्रन्थकृत्परमेश्वरभक्तिम् प्रार्थयते—श्रीरामेति।

इति श्रीमदापदेवसूनुनाऽनन्तदेवेन विरचिते भगवन्नामकौमुदीप्रकाशे
द्वितीयः परिच्छेदः समाप्तः ॥

# श्रीभगवन्नामकौमुदी ।

तृतीयः परिच्छेदः ।

श्रीकृष्णाय नमः ।

यस्य नामान्यधीयानैः शुकैरपि शुकायितम् ।
विनेयैर्बल्लवस्त्रीणां स कृष्णः कुरुतात् कृपाम् ॥

प्रकाशस्य

तृतीयः परिच्छेदः ।

॥ श्रीकृष्णाय नमः ॥

उत्तरविचारार्थं मङ्गलमाचरति—यस्येति । गोपीनां शिष्यैः शुकैः पक्षिभिः यस्य नामान्युच्चारयद्भिः शुकयोगीन्द्रवदाचरितं स कृष्णः कृपां करोत्वित्यर्थः ।

एवं भक्तिकर्म्मणोः संभूय साधनत्वे निरस्ते पुनरिदं विचार्यते—किमनयोर्व्यवस्था विकल्पो वेति ? तत्राधिकारिभेदेन व्यवस्थायामधिकारिविशेषणस्य किंचित्करत्वात् श्रद्धाऽऽदिसहकृतस्यैव कीर्त्तनस्य पावनत्वं फलिष्यति, विकल्पे तु तन्निरपेक्षस्यैव, तत्र गुरुलघुनोर्विकल्पे गुरुणो ह्यत्यन्तबाधप्रसङ्गाद् व्यवस्थैव साधीयसी ।

निरूपणीयं प्रतिजानीते—एवमिति । कर्म द्वादशाब्दादि । संभूयेति । अङ्गप्रधानभावेन समप्राधान्येन वा समुच्चित्येत्यर्थः । व्यवस्था, अधिकारिविशेषस्य नामकीर्तनं तद्भिन्नलक्षणस्याधिकारिणो द्वादशाब्दादीति । विकल्पस्तु येन केनाप्यधिकारिणा नामकीर्तनं द्वादशाब्दादि वा कार्यमिति । कस्मिन्सति किं स्यात्तत्राह—तत्रेति । किंचित्करत्वात्, फलोपयोगित्वादित्यर्थः । आदिशब्देन शुचित्वादि । पूर्वपक्षमाह—तत्रेति । द्वादशाब्दादि गुरुभूतं, नामकीर्तनं लघुभूतं, तत्र लघुनैव पापक्षये गुरुभूतं न केनाप्यनुष्ठीयेत ततो व्यवस्थैव युक्तेत्यर्थः ।

ननु नामकीर्त्तनविषयं शास्त्रं न द्वादशवार्षिकादेः साधनत्वमपलपति तत्कथं बाधः? उच्यते—अननुष्ठानमेवात्र बाधितत्वं, न विषयापहारः। यथोक्तं भट्टैः "एतेन प्रवृत्तिश्च फलं प्रमाणानां प्रवृत्त्याख्यफलापहारश्च बाध"-इति। तत्र यदा समशिष्टयोर्द्वयोरपि नोपलभ्यते विशेषः तदा निरङ्कुशत्वादिच्छायाः कस्य चित्कदा चित्कस्मिंश्चित्प्रवृत्तिरिति द्वयोरपि पाक्षिकमनुष्ठानं; यदा पुनरुपलभ्यते विशेषः सुकरदुष्करत्वभेदेन तदा सुकरानुरागिणीमिच्छां न कश्चिदपि कदा चिदप्यपाक्रष्टुमीष्ट इति दुष्करस्यात्यन्तबाध एव तस्माद् व्यवस्थैव वरीयसी।

आशयानभिज्ञः शङ्कते—नन्विति। आशयमाविष्करोति—उच्यत—इति। उपेकाचार्यसंमतिमाह—यथोक्तमिति। प्रवृत्तिरनुष्ठानम्। अननुष्ठानाख्यं बाधं विवृणोति—तत्रेति। विशेषमेवाह—सुकरत्वदुष्करत्वभेदेनेति। सुकरानुरागिणीं सुकरे कर्मणि स्वारस्येन प्रवर्तमानाम्। आक्रष्टुं = दुष्करे कर्मणि प्रवर्त्तयितुम्। ईष्टे समर्थः। इतिशब्दो हेतौ।

तत्र के चिन्नितान्तमनुरक्ताः स्मृतिषु पुराणेभ्यश्च मनागिवभ्यतो महदल्पपापभेदेन वा ज्ञाताज्ञातकृतभेदेन वा प्रकाशरहस्यभेदेन वा स्मार्त्तं पौराणञ्च प्रायश्चित्तं—व्यवस्थापनीयमिति वदन्ति,

ततश्चाल्पाज्ञानादिकृतविषयैः स्मार्त्तैर्विकल्प्यते पौराणमित्युक्तं भवति। तन्न साधीयः

पापे गुरूणि गुरूणि स्वल्पान्यल्पे च तद्विदः।
प्रायश्चित्तानि मैत्रेय जगुः स्वायंभुवादयः॥
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परमि—

ति गुरुलघुसर्व्वपापानामविशेषेण कृष्णानुस्मरणस्य मुख्यप्रायश्चित्तत्वाभिधानाद्।

केषां चिद् व्यवस्थामाह–तत्रेति । स्मृतिषु नितान्तमतिशयेनानुरक्ता अभिनिविष्टा इत्यन्वयः । मनाग् = अल्पम् । अनेनानुवादसमय एवाखरसः सूच्यते, श्रुतिमूलत्वेन स्मृतिपुराणयोर्विशेषाभावादिति । महत्सु वा ज्ञानकृतेषु वा प्रकाशकृतेषु वा पापेषु स्मार्तं प्रायश्चित्तम्, इतरेषु पौराणमिति व्यवस्था, कर्तृव्यतिरिक्तेनाज्ञातं रहस्यम् तस्मिन्नेव मते एवं विशेषमाह––ततश्चेति । अल्पेऽज्ञानकृते रहस्यकृते च पातके स्मार्तं प्रायश्चित्तमस्त्येव किंतु तस्य नामकीर्तनेन विकल्प इति भावः । तदेतद्दूषयति––तत्रेति । गुरूणि पापे गुरूणि प्रायश्चित्तानि, अल्पेऽल्पानि, स्वायंभुवो मनुस्तदादयो जगुः । तेषामिति निर्धारणे षष्ठी । तेषामशेषाणां गुरुलघुप्रायश्चित्तानां मध्य इत्यर्थः । परशब्दार्थमाह––मुख्येति ।

ननु को नाम न ब्रूते कृष्णानुस्मरणं महापातकादि––प्रकीर्णान्तसर्वाघसंहरणमिति, सा हि ब्रह्मविद्या, तथा हि कृषति विलिखति विदारयति संसाराटवीमिति वा कर्षति=आकर्षति=आत्मसात्करोति वाऽज्ञानमिति वा कृष्णः परमात्मा सदानन्दरूपो वा

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते––

इति च स्मृतेः, तस्य चायमर्थः, भवनं भूः सत्ता तद्वाचको भूवाचको न तु पृथिवीवाचक इति; निर्वृतिवचनेन णकारेणानन्वयात्, पृथिवीवर्त्तिनां जीवानामानन्दो यस्मादिति विग्रहे लक्षणाप्रसङ्गात्, आस्थावरमाचतुराननं च सर्वेषां जीवानामानन्दयितरि स्वसमयपरिपच्यमान––नानापुण्योपसादितविविधविषयसन्निधिसंक्रज्यमानम––नोमुकुरमण्डलान्तरभिव्यज्यमानतया तत्सदानन्दतयोपधीयमाने परमात्मनि पृथिवीगतानन्दत्वस्य तद्धेतुत्वस्य चाविवक्षितत्वात्, विवक्षितत्वे वा "ये चाऽमुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च"इत्यादिशास्त्रविरोधात्,

तस्मान्निरवद्यस्य सर्व्वेषामात्मभूतस्य सदानन्दस्यानुस्मरणं पुनः पुनश्चिन्तनं सजातीयप्रत्ययावृत्तिलक्षणं विजातीयप्रत्ययनिरोधलक्षणं वा निदिध्यासनमिहोपादीयते तस्य चात्मसतत्त्वसाक्षात्कारकारणभूतं श्रवणं प्रति फलोपकार्य्यङ्गभूतस्यासम्भावनानिरासवत् तत्प्रतिबन्धकपातकप्रध्वंसोऽपि द्वारकार्य्यं भवत्येव,

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्म्मणः—

इति स्मरणात्, कीर्त्तनस्य महापातकादिनिवर्त्तकत्वे नेदं प्रमाणम्।

नात्र नामकीर्तनस्य मुख्यप्रायश्चित्तत्वमभिधीयत इति शङ्कते—नन्विति। कृष्णानुस्मरणस्य ब्रह्मविद्यात्वं साधयति—तथा हीति। विलिखतेरर्थमाह—विदारयतीति। आकर्षतेरर्थमाह-आत्मसादिति। अज्ञानमिति छेदः। विलापयतीत्यर्थः। परमात्मा निर्गुणं ब्रह्मेत्यर्थः। अर्थान्तरमाह—सदानन्द इति। निर्वृतिरानन्दः। नन्वेवं सद्रूपत्वेनानन्दरूपत्वेन द्वैतापत्तिस्तत्राह-तयोरैक्यमिति। सदानन्दयोरित्यर्थः। ऐक्यस्य धर्मान्तरत्वं वारयति-परं ब्रह्मेति। ननु भूवाचकस्य कथं—सद्वाचकत्वमत आह—तस्य चेति। अनन्वयादनन्वयप्रसङ्गात्। ननु किमित्यनन्वयः कृषिवाच्यभुवो णवाच्य आनन्दो यस्मादिति विग्रहादत-आह-पृथिवीवर्त्तिनामिति। पृथिव्या नानन्दो जडत्वात्तद्गतजीवलक्षणायां च स एव दोषः। भूवाचकेन तद्वर्त्तिजीवलक्षणा, जीवानामिति षष्ठ्यर्थलक्षणा चेत्यभिप्रायेण लक्षणाद्वयप्रसङ्गादिति क्व चित्क विस्पाठः। दोषान्तरमाह—स्वावरमिति। स्वसमये परिपच्यमानानि फलोन्मुखानि नानापुण्यानि तैरुपसादिता विविधा विषयास्तेषां सन्निधिरव्यवधानं तेन संसृज्यमानं मन एव मुकुरमण्डलमादर्शमण्डलं तदन्तरभिव्यज्यमानतयेत्यर्थः। तत्तदानन्दतयेति। स्रगानन्दश्चन्दनानन्दइत्यादिरूपेणेत्यर्थः। उपधीयमाने = उपाधितः प्रतीयमाने। अविवक्षितत्वात्तात्पर्याविषयत्वाद्। विपक्षे दोषमाह—विवक्षितत्वे चेति। अमुष्मादादित्यमण्डलाद् देवकामा देवानन्दाः, अतश्च सर्वजनानन्दप्रदे परमात्मनि पृथिवीगतजीवानन्दप्रदत्वविवक्षा न युक्तिमतीति भावः।

उपसंहरति—तस्मादिति । कथं निदिध्यासनस्य पापक्षयहेतुत्वं करणत्वादित्याशङ्क्य. नेदं ज्ञानकरणं किं तु श्रवणं, तदङ्गं सनं, तस्य च द्वारं पापक्षय इत्याह—तस्य चेति । श्रवणस्याङ्गत्वं ध्यासनस्य फलोपकार्यङ्गत्वं चास्माभिः सिद्धान्ततत्त्वे असंभावनेति । यथा श्रवणमननयोः ... द्वारं तथेत्यर्थः । तत्प्रतिबन्धकेति । तच्छद्वेन साक्षात्कारो परमप्रकृतमुपसंहरति—कीर्तनस्येति । नेदमिति । पापे णीत्यादिवचनद्वयं न प्रमाणमित्यर्थः ।

इदमसुन्दरम्, कृष्णशब्दस्य ...
यशोदास्तनन्धये ब्रह्मणि रूढत्वाद्, ...
न्यायात् । यौगिकत्वे वा ...
समुल्लङ्घितसकलसेतूनां ...
पापेशविवशविशृङ्खलसकलकरणवृत्ती
नामरातीना, मत्यन्तपराचीनचेतसां
सरीसृपाणा, मतिग्रहलमोहपटलीपिन
वनतरुगुल्मलतावीरुधामपि मुक्तिस
रतो नित्यनिरस्तनीहारतया निरन्
दनन्तानन्दस्य गोपालशिरोमणेः सद्
ऽस्यैवेति तस्यैवेह ग्रहणं न निर्गुणस्
प्राचुर्यात् तत्रैव प्रथमतरप्रतीतेरुदयात्

दूषयति-कृष्णशब्दस्येति । कृषिर्भूवाचकः... कथं त्यज्यत इत्याशङ्क्य; तेनापि श्रीकृष्ण ... यौगिकत्वइति । सेतवो धर्ममर्यादाः । विशृङ्खल... वृत्तय इन्द्रियवृत्तयः, पराचीनं विषयाभिमुखम् । पिनद्धानि = आच्छादितानि । वितरतो ददतः । न्तोऽपरिच्छिन्नः । सर्वप्रकार इति । ... न्योक्तयोगाभिप्रायेण । उभयत्र योगाविशेषे कथं ... प्रयोगेति । प्राचुर्याद्बाहुल्यात्, यथा गोशब्दस्य ...

पेऽपि प्रयोगबाहुल्यात्सास्नादिमत्पिण्डप्रतीतिः प्रथमं जायते तथेत्यर्थः। तत्रैव = श्रीगोपाल एव, विषयसप्तमी।

तस्य चानुस्मरणं कीर्त्तनमेव न ध्यानं वाक्यशेषे कीर्त्तनस्यैव प्रशंसनात्

क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम्।

क्व जपो वासुदेवेति मुक्तिबीजमनुत्तममि—

ति, न चान्यद्विधीयतेऽन्यत्प्रशस्यत इति सङ्गच्छते, अपि च प्रतीचीनमात्मवस्तु न कदा चिदपि स्मरणाङ्गनमवतरति, प्रतीचीनत्वस्यैव व्याघाताद्, अतस्तस्य नाम्ना रूपेण वा तदुभयनिरासेन वोपाधिना तद्विषयत्वं वक्तव्यं, तत्र नामोपाधिकं स्मरणमिह गृह्यते तच्च कीर्त्तनमेव, स्मरणशब्देन च कीर्त्तनमुपाददानस्य मानसमपि भगवन्नाम्नोऽनुसन्धानं सर्वाघसंहारि न केवलं वाचिकमिति विवक्षितं, पुराणान्तरे च समानप्रकरणे नानाविधनरकयातनाक्रन्दकुद्दालस्य कीर्तनस्यैव वर्णितत्वाद्, इहाप्यस्मिन् प्रकरणे सङ्कीर्त्तनमेवोपादीयते न ध्यानं; तस्य च गुरुलघुभेदानादरेण सर्वाघसंहारहेतुत्वेनावधारितत्वान्न महदल्पपापभेदेन व्यवस्थापनं गरीयः, अत एव न ज्ञानाज्ञानप्रकाशरहस्यभेदावपि व्यवस्थापकौ, स्वरूपेण वा गरिमलघिमानौ स्यातां निमित्तान्तरेण वा; गरिमलघिमानावेव तौ कस्तत्र विशेषः, गुरुलघुनोश्चांहसोरविशेषेण निवर्त्तकं भगवत्कीर्त्तनमित्यभ्यधायि, तत्कथं तद्भेदेन व्यवस्थेति ?

ननु तथाऽपि कथं नामकीर्तनस्य प्रायश्चित्तत्वाभिधानं तत्राह— तस्य चेति। वाक्यशेषे = उत्तरश्लोके। नाकपृष्ठं स्वर्गः। अनुत्तमं न विद्यत उत्तमं यस्मात्। प्रतीचीनं प्रत्यग्रूपम्। स्मरणेति। स्मृतिविषयीभवती-

उपसंहरति—तस्मादिति । कथं निदिध्यासनस्य पापक्षयहेतुत्वं ज्ञानकरणत्वादित्याशङ्क्य, नेदं ज्ञानकरणं किं तु श्रवणं, तदङ्गं निदिध्यासनं, तस्य च द्वारं पापक्षय इत्याह—तस्य चेति । श्रवणस्याङ्गत्वं निदिध्यासनस्य फलोपकार्यङ्गत्वं चास्माभिः सिद्धान्ततत्त्वे प्रपञ्चितम् । असंभावनेति । यथा श्रवणमननयोः प्रमाणप्रमेयासंभावनानिरासो—द्वारं तथेत्यर्थः । तत्प्रतिबन्धकेति । तच्छब्देन साक्षात्कारो निर्दिश्यते । परमप्रकृतमुपसंहरति—कीर्तनस्येति । नेदमिति । पापे गुरूणि गुरूणीत्यादिवचनद्वयं न प्रमाणमित्यर्थः ।

इदमसुन्दरम्, कृष्णशब्दस्य तमालश्यामलत्विषि यशोदास्तनन्धये ब्रह्मणि रूढत्वाद्, रूढिर्योगमपहरतीति न्यायात् । यौगिकत्वे वा दुर्वारमदनमहाग्रहगृहीततया समुल्लङ्घितसकलसेतूनां गोकुलकामिनीनां, मतिविषमरोषावेशविवशविश्रृङ्खलसकलकरणवृत्तीनां पूतनाप्रभृतीनामरातीनां, मत्यन्तपराचीनचेतसां यमुनावनपशुपक्षिसरीसृपाणां, मतिबहलमोहपटलीपिनद्धसर्वेन्द्रियाणां वृन्दावनतरुगुल्मलतावीरुधामपि मुक्तिसुखमनिवारितं वितरतो नित्यनिरस्तनीहारतया निरन्तरस्वमहिमसमुल्लसदनन्तानन्दस्य गोपालशिरोमणेः सर्वप्रकारोऽपि योगोऽस्यैवेति तस्यैवेह ग्रहणं न निर्गुणस्य ब्रह्मणः प्रयोगप्राचुर्यात् तत्रैव प्रथमतरप्रतीतेरुदयात्,

दूषयति—कृष्णशब्दस्येति । कृषिर्भूवाचक इत्यादिशास्त्रसिद्धो योगः कथं त्यज्यत इत्याशङ्क्य, तेनापि श्रीकृष्ण एवोच्यत इत्याह—यौगिकत्व इति । सेतवो धर्ममर्यादाः । विश्रृङ्खला उच्छृङ्खलाः । करणवृत्तय इन्द्रियवृत्तयः, पराचीनं विषयाभिमुखम् । सरीसृपाः सर्पादयः । पिनद्धानि = आच्छादितानि । वितरतो ददतः । नीहारमज्ञानम् । अनन्तोऽपरिच्छिन्नः । सर्वप्रकार इति । कृषतिविलक्षतीत्यादिपूर्वग्रन्थोक्तयोगाभिप्रायेण । उभयत्र योगाविशेषे कथं तस्यैव ग्रहणं तत्राह—प्रयोगेति । प्राचुर्याद्बाहुल्यात्, यथा गोशब्दस्य दशस्वर्थेषु रूढत्वाविशे

पेऽपि प्रयोगबाहुल्यात्साक्षादिमत्पिण्डप्रतीतिः प्रथमं जायते तथेत्यर्थः। तत्रैव = श्रीगोपाल एव, विषयसप्तमी।

*तस्य चानुस्मरणं कीर्त्तनमेव न ध्यानं वाक्यशेषे* कीर्त्तनस्यैव प्रशंसनात्

क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम्।

क जपो वासुदेवेति मुक्तिबीजमनुत्तममि—

ति, न चान्यद्विधीयतेऽन्यत्प्रशस्यत इति सङ्गच्छते, अपि च प्रतीचीनमात्मवस्तु न कदा चिदपि स्मरणाङ्गनमवतरति, प्रतीचीनत्वस्यैव व्याघाताद्, अतस्तस्य नाम्ना रूपेण वा तदुभयनिरासेन वोपाधिना तद्विषयत्वं वक्तव्यं-तत्र नामोपाधिकं स्मरणमिह गृह्यते तच्च कीर्त्तनमेव, स्मरणशब्देन च कीर्त्तनमुपाददानस्य मानसमपि भगवन्नाम्नोऽनुसन्धानं सर्वाघसंहारि न केवलं वाचिकमिति विवक्षितं, पुराणान्तरे च समानप्रकरणे नानाविधनरकयातनाकन्दकुद्दालस्य कीर्तनस्यैव वर्णितत्वाद्, इहाप्यस्मिन् प्रकरणे सङ्कीर्त्तनमेवोपादीयते न ध्यानं; तस्य च गुरुलघुभेदानादरेण सर्वाघसंहारहेतुत्वेनावधारितत्वान्न महदल्पपापभेदेन व्यवस्थापनं गरीयः, अत एव न ज्ञानाज्ञानप्रकाशरहस्यभेदावपि व्यवस्थापकौ, स्वरूपेण वा गरिमलघिमानौ स्यातां निमित्तान्तरेण वा; गरिमलघिमानावेव तौ कस्तत्र विशेषः, गुरुलघुनोश्चांहसोरविशेषेण निवर्त्तकं भगवत्कीर्त्तनमित्यभ्यधायि, तत्कथं तद्भेदेन व्यवस्थेति ?

ननु तथाऽपि कथं नामकीर्तनस्य प्रायश्चित्तत्वाभिधानं तत्राह— तस्य चेति। वाक्यशेषे = उत्तरश्लोके। नाकपृष्ठं स्वर्गः। अनुत्तमं न विद्यत उत्तमं यस्मात्। प्रतीचीनं प्रत्यग्रूपम्। स्मरणेति। स्मृतिविषयीभवती-

त्यर्थः। कथं तर्हि तत्र तत्र स्मरणविषयत्वोपन्यासः पुराणादौ तत्राह-अत इति। नाम्ना कृष्णरामेत्यादिना, रूपेण मेघश्यामत्वादिना वा, तदुभयनिरासरूपेण वोपाधिना स्मरणविषयत्वं वक्तव्यमित्यर्थः। इहेति। कृष्णानुस्मरणं परमित्यादिवाक्य इत्यर्थः। यदि कीर्तनमत्राभिप्रेतं किमिति स्मरणशब्दप्रयोगस्तत्राह—स्मरणेति। युक्त्यन्तरमाह—पुराणान्तरे चेति। तथाऽपि नामकीर्तनं पौराणमल्पाज्ञानकृतरहस्यपापनिवर्त्तकं भविष्यति तत्राह—तस्य चेति। अवधारितत्वादिति। पुराणसारस्यैनेति शेषः। महति पातके स्मार्त्तं प्रायश्चित्तम्, अल्पे नामकीर्तनमिति व्यवस्था नोचितेति भावः। स्वरूपेणेति। ब्रह्महत्याऽऽदिषु स्वरूपेण गरिमा। अनृतवदनादिषु स्वरूपेण लघिमा। निमित्तान्तरेण वा स्यातामित्यनुषङ्गः। लघुनोऽपि पातकस्याभ्यासादिनिमित्तान्तरवशेन गरिमा। गुरुणो रहस्यत्वादिनिमित्तवशेन लघिमा। ताविति। स्वरूपनिमित्तान्तरकृतावित्यर्थः। गरिमलघिमानावेवेति विधेयः कस्तत्रेति। उभयकृते गरिमलघिमस्वरूपे न कोऽपि विशेष इत्यर्थः। फलितमाह—गुरुलघुनोरिति। अंहसोः पापयोः। तद्भेदेन = गुरुलघुत्वादिभेदेन।

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते—

इत्यनेनापि व्यवस्था न प्रतीयते, कथम्? अल्पपापनिवर्त्तकत्वे कीर्त्तनस्य न चित्रबुद्धिः, किन्तु नितान्तमहागसामप्यंहसां कीर्त्तनमात्रान्निवृत्तिरित्युच्यमाने कस्यचिदनवगतभगवन्नाममहिम्नः पुंसश्चित्रबुद्धिरुत्पद्यते; सा निवर्त्यते कैमुत्यन्यायेन, तथा हि यस्मिन्न्यस्तमति, यच्चिन्तने, यत्र निवेशितात्ममनसः, चेतसि यः स्थित इति च स्मरणमेव शब्दभेदेन प्रतिवाक्यमलंकारार्थमावर्त्यते—

विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमा—

इतिवत्। उत्तरोत्तरभूमिकागतस्तु विशेषो विद्यमानोऽपि न विवक्ष्यते कैमुत्यानुपयोगाद्, नरकशब्देन तु नाधर्मफलस्य ग्रहणं, तन्निवृत्तेः कैमुत्येन सिषाधयिषितत्वात्, ततश्चायमर्थः—यस्मिन्नच्युते निविष्टबुद्धिर्नरकं नराणां—कं सुखं मानुषमानन्दं सार्व्वभौमत्वादिकम् अन्तरायत्वेनापि न प्राप्नोत्येव यदि कथं चिदसावमरपुरीपारमैश्वर्य्यमधिगच्छति तर्हि स विघ्नः, द्विपरार्द्धस्थायी हैरण्यगर्भोऽपि लोकोऽल्पकः, मुरमथनचरणस्मरणस्यातिविसदृशं फलं, सार्व्वभौमसेवाया इव स्वोदरम्भरित्वं, किं—तर्हि? तेषां स्मरतां पुंसां मुक्तिं सकार्य्याविद्याविध्वंसद्वारेण निरतिशयानन्दे निजमहिमन्यवस्थानमेव ददाति भगवान्, अमलधियो हि ते न हि तेषां समलधियामिवान्येषां देशकालावच्छिन्नं फलमुचितम् इदमेवामलत्वं धियो यदुत पुरुषोत्तमपादपल्लवप्रवणत्वं, विषयद्वारेणैव हि समलत्वममलत्वं च धियः, ततश्च येषां धीर्भुवनत्रितयान्तरे वर्त्तमानं यं कं चिदमरमन्यमवलम्बते तेषामुचितान्येव साम्राज्यादीनि, येषां पुनर्भुवनत्रितयोत्तीर्णभक्तानुगृहीतमूर्त्तिमुत्तमश्लोकशिखामणिमवलम्बते तेषान्तु विविधपरिच्छेदविरहिणी मुक्तिरेवोचिता न तु परिच्छिन्नान्यन्यानि फलानीति।

अव्यवस्थायां प्रमाणान्तरमाह—यस्मिन्निति। नात्राव्यवस्था प्रतीयत इत्याशङ्कते—कथमिति। समाधत्ते—अल्पेति। अत्र हि विचित्रबुद्धिः कैमुत्यन्यायेन परिह्रियते, सा च प्रसक्ता परिहर्तव्या, प्रसङ्गश्च चित्रबुद्धेर्महापापनिवर्त्तकत्वे नामकीर्तनस्योच्यमाने भवति; नाल्पपापनिवर्त्तकत्वे, तस्मादव्यवस्थैव युक्तेति भावः। कस्य चिदिति। भगवदनुग्रहादवगतभगवन्नाममाहात्म्यानां महापुरुषाणां तु न तत्र चित्रबुद्धिरिति भावः। कैमुत्यन्यायं विवरिष्यन्नक्षरशः श्लोकार्थमाह—

तथा हीति। तत्र पौनरुक्त्यं परिहरति—यस्मिन्निति। उत्तरोत्तरेति। नरकशब्दवाच्यसार्वभौमानन्दस्वर्गब्रह्मलोकमुक्तीनामुत्तरोत्तरमस्त्युत्कर्षः परं तु न विवदयतइत्यर्थः। कैमुत्यानुपयोगादिति। अस्मिन्व्याख्येऽच्युतकीर्तनस्य महापापक्षयहेतुत्वे कैमुत्यन्यायः प्रदर्श्यते तत्रैषामुत्तरोत्तरोत्कर्षो नोपयुज्यत इत्यर्थः। नरकशब्दस्य सार्वभौमानन्दपरत्वं दर्शयति—नरकेति। तन्निवृत्तेर्नरकनिवृत्तेरित्यर्थः। न प्राप्नोत्येवेति। अतितुच्छत्वादिति भावः। स्वर्गोऽपि यच्चिन्तने विघ्न इत्यस्य तात्पर्यमाह—यदीति। यत्र निवेशितेत्यादेस्तात्पर्यमाह—द्विपरार्द्धेति। मुक्तिः चेतसीत्यादेस्तात्पर्यमाह—किं तर्हीत्यादि। अमलधियामिति हेतुगर्भं विशेषणमित्याह—अमलेति। तदुपपादयति—न हीति। धियोऽमलत्वं च विषयकृतमित्याह—इदमेवेति। फलितमाह—तत श्चेति। भुवनत्रितयादुत्तीर्णा भक्ता निष्कामत्वादित्यर्थः। तेष्वनुग्रहाय गृहीता मूर्तिर्येन स तथा। उत्तमेति। पुण्यकीर्तिचूडामणिमित्यर्थः। त्रिविधेति। देशतः परिच्छेदो मूर्तत्वं, कालतः परिच्छेदो विनाशित्वं—वस्तुतः परिच्छेदो भेदः, तद्विरहिणमित्यर्थः।

इह दातृदानसंप्रदानभावस्यौपचारिकत्वाद् न षष्ठीपर्य्यनुयोगः, मुक्तिमपि न कतिपयानां वितीर्य्य विरमति मुरभिदितरदानिवद्, अपि तु येषां मनसि स्थितः तेषां सर्वेषामेवेति बहुव्रीहौ सिद्धस्य सर्व्वनाम्नो विवक्षा, अपि च अन्येषां दातृणां यथार्थिनो मनसि स्थिताः तर्हि तेभ्योऽर्थं वितरन्ति, अयं पुनरर्थिनामेव मनसि स्थितो मुक्तिं ददाति, अन्यथान्ये दातारो धनीयकेभ्यो धनं विभज्य वितरन्तो व्ययन्ति; अयं पुनरव्ययः प्रतिधनीयकं सर्व्वस्वं वितरन्नपि न व्येति, य एवं मनोमात्रेणाप्यभिमुखानां सर्व्वाननर्थानपनयति निरतिशयं चार्थमुपनयति तस्मिन्वहिरन्तःकरणत्रयी वाङ्मनसलक्षणांप्रणिदधानानामनर्थैकदेशपरिहारमात्रं किं चित्रं ? नैव चित्रमिति। ततश्च ज्ञानकृतप्रकाशमात्रापातकपरिहारो-

ऽपि मनसः क्षतिमेवावहति न पुनः पूर्त्तिं, तत्कथं तत्रापि सङ्कोचेन व्यवस्थाऽऽशङ्केति। एवं च

अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिवे—

त्येतदप्यनुसृतं भवति, वर्णितव्यवस्थायां तु प्रकीर्णकविषयत्वे पातकशब्दो बाध्येत, अतिपातकादिविषयत्वे सर्व्वशब्दः, न च पातकशब्दस्येव सर्व्वशब्दस्यापि विशेषान्तरे पर्य्यवसानं, प्रयोगवैफल्यात् पातकशब्देनैव तत्सिद्धेः, अस्मत्पक्षे तु पातकशब्देनैव सर्व्वपातकग्रहणेऽपि न्यायाभासपरिकल्पितव्यवस्थाबाधेन सफलः सर्व्वशब्दः, तस्मान्नैव व्यवस्था।

ननु ददातियोगे चतुर्थी स्यान्न षष्ठी तत्राह—इहेति। औपचारिकत्वादिति। त्रिविधपरिच्छेदशून्याया मुख्यददात्यर्थयोगाभावान्न चतुर्थीप्रसङ्ग इति भावः। अमला धीर्येषामिति बहुव्रीहावन्तर्गतस्य सर्वनाम्नस्तात्पर्यमाह—मुक्तिमिति। मुरभिन्मुरारिः। इतरदानिवदिति वैधर्म्यदृष्टान्तः। पुंसां चेतसि स्थित इत्यस्य तात्पर्यमाह—अपि चेति। अर्थिनामिति संपातायातं यतो निष्कामानामपि मनसि स्थितो मुक्तिं ददाति। अव्ययपदतात्पर्यमाह—अन्यच्चेति। वनीयका याचकाः। किं चित्रमित्यादेस्तात्पर्यमाह—य एवमिति। सर्वाननर्थानिति। अविद्याऽहंकारादीनित्यर्थः। अपनयति = निवर्तयति। निरतिशयं चार्थं परमानन्दरूपं स्वात्मानम् उपनयति प्रापयति। तस्मिन्परमात्मनि, बहिःकरणं वाग्, अन्तःकरणं मनः, एतद्द्वयीम्, प्रणिदधानानामेकाग्रीकुर्वताम्। कीर्त्तने हि वाङ्मनसप्रणिधानं, "यन्मनसा ध्यायति तद्वाचा वदती"ति श्रुतेः। अनर्थैकदेशेति। यदघं प्रयाति विलयमित्युक्तमित्यर्थः। परमप्रकृतमुपसंहरति—ततश्चेति। परिहारो नाशः। मनसः क्षतिमिति। कीर्तने वाङ्मनससाध्ये मनोमात्रसाध्यमुक्तिफलापेक्षया फलाधिक्यमुचितं, न तु पापप्रविलयमात्रफलकत्वेन तद्ह्रास इति भावः। अल्पाज्ञानकृतोपपातकादिनिरासहेतुभूतं नामकीर्तनमिति व्यवस्था दूरापास्तेत्याह—तत्कथमिति। वर्णितव्यवस्थाया बाधका-

न्तरमाह—एवं चेति। महापातकाद्यपपातकान्तपातकव्यतिरिक्तं पापं प्रकीर्णकं, महापातकसममतिपातकम्। आदिपदेनोपपातकम्। ननु प्रकीर्णकविषयत्वेऽपि नामकीर्तनस्य न पातकशब्दो बाध्यते तस्य पापमात्रे प्रयोगदर्शनात्तत्राह—न चेति। वैकल्याद्वैयर्थ्यादित्यर्थः। ननु त्वरपत्तेऽपि सर्वपदवैयर्थ्यमविशेषेणाशेषपापविषयत्वात्पातकशब्दस्य तत्राह—अस्मदिति।

श्रीभागवते तु शृङ्गग्राहिकयैव महापातकान्यनुक्रम्य सङ्कीर्त्तनेनैव तन्निवृत्तिरभिहिता—

स्तेनः सुरापो मित्रध्रुक् ब्रह्महा गुरुतल्पगः।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिरिति॥

न च तदज्ञानकृतविषयं रहस्यविषयं वेति वक्तव्यं, बुद्धिपूर्वमखिलजगत्प्रख्यातं पातकं कृतवतोऽजामिलस्यापि नामकीर्त्तनादेव तन्निवृत्तेर्वर्णनाद्, न च तदप्युपपातकादिविषयमिति वक्तव्यं, तस्मिन्महापातकानामप्यनुक्रान्तत्वाद्

यतस्ततोऽप्युपानिन्ये न्यायतोऽन्यायतो धनमि—त्यादिना।

तत्रैव युक्त्यन्तरमाह—श्रीभागवत इति। न चेति। सर्वेषामिति श्रुत्या बुद्धिपूर्वकारिणामपि संगृहीतत्वादिति भावः। उपक्रमविरोधश्चेत्याह—बुद्धिपूर्वमिति। अन्यायतो धनमिति सुवर्णस्तेयसंग्रहः।

श्रीविष्णुधर्मे च बुद्धिपूर्वप्रकाशमहापातकिनः क्षत्रबन्धोरपि नामकीर्त्तनमात्रात् परमपूतत्वप्रतिपादनाद् नेयं व्यवस्था न्यायविदां हृदयमधिरोहति, तस्मादन्यथा व्यवस्थाप्यते—तद्यथा यस्य पुराणेषु मातृवचनेष्विव न कदा चिदिमान्यपथ्यमतथ्यं वाऽभिदधति; अपि तु पथ्य-

मेव तथ्यमेवेति दृढतरश्रद्धाऽनुबद्धा, भगवति च भक्त-जनमनःसरोजिनीजीवितेश्वरे नमदमरमण्डलमौलिमाला-शलाकालिखितनिजविजयवर्णनावर्णश्रेणीसनाथपादपीठे पुरभिदि मुरभिदि वा भक्तिभरगरिमगर्भिणी स्तम्भस्वेदरोमोद्गमादिसात्त्विकभावसहचरी चित्तवृत्तिः साऽपि न गतानुगतिकत्वेन; अपि तु तदीयमहिममहार्णवावगाहनेन, तस्य पौराणानां श्रवणकीर्त्तनादीनामन्यतमं गुरुलघुविशेषानादरेण सर्व्वेषामेव निरङ्कुशमंहसां परमं प्रक्षालनम्, इतरस्य पुनः प्रतिपदोक्तं स्मार्त्तमिति।

प्रतिपादनादिति।

गोविन्देति समुच्चार्य पदं क्षपितकल्मषः।

क्षत्रबन्धुर्विनष्टात्मा गोविन्दत्वमुपेयिवानि—

त्यादिवाक्यैरिति भावः। मतान्तरमाशङ्कते—तस्मादिति। यस्य पुरुषस्य। पुराणेष्विति पदस्य श्रद्धापदेन सम्बन्धः। भगवतीत्यस्य चित्तवृत्तिरित्यनेन सम्बन्धः। नमताममराणाम्, मण्डलं समूहस्तस्य मौलिषु मुकुटेषु माणिक्यानि तेषां शलाका लेखन्यस्ताभिर्लिखिता ये निजस्य भगवतो विजयवर्णनासम्बन्धिनो वर्णास्तेषां श्रेणी तया सनाथं युक्तं पादसम्बन्धि पीठं यस्येति भगवद्विशेषणम्। भक्ते—र्भरो भारस्तस्य गरिमा तेन गर्भिणीति चित्तवृत्तेर्विशेषणम्। स्तम्भो निर्व्यापारता। आदिशब्देनानन्दाश्रुग्रहणम्। एते सात्त्विका भावा—स्तेषां सहचरीत्यर्थः। चित्तवृत्तिर्वर्त्तत इति शेषः। तदीयेति। तच्छब्देन भगवान्। तस्य पुरुषस्य। गुरुलघुविशेषेति। सर्वपापनिवर्त्तकत्वश्रवणादिति भावः। रंहो वेगः। इतरस्येति। अश्रद्धस्याभक्तस्य चेत्यर्थः। प्रतिपदोक्तं तत्र तत्र विस्पष्टोक्तम्।

तत्र श्रद्धावत्तोऽधिकारे नारदीयवचनं प्रमाणं—

यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावतीति,

श्रीभागवते च—

यदृच्छया मत्कथाऽऽदौ जातश्रद्धश्च यः पुमान्।

न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद इति,
तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत, इति च
पुराणेषु श्रद्धावतां भक्तियोगाधिकारं दर्शयति
निवर्त्तयति तु कर्माधिकारम्।

श्रीभगवद्गीतासु
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।
नायं लोकोऽस्ति न परो न सुखं संशयात्मन—,

इति श्रद्धाहीनस्य सर्वत्रानधिकारं दर्शयति। शिवधर्मोत्तरेऽपि—

विधिवाक्यमिदं शैवं नार्थवादः शिवात्मकः।
लोकानुग्रहकर्ता यः स मृषाऽर्थं कथं वदेदिति—

गुणवादनिराकरणेन शिवशासनेषु श्रद्धामुत्पादयन् श्रद्धावतोऽधिकारं दर्शयति।

श्रुतिरपि कर्मकाण्डे ज्ञानकाण्डे च श्रद्धावत एवाधिकारं दर्शयति, तत्र कर्म्मकाण्डे श्रद्धयाऽग्निःस मिध्यते श्रद्धया हूयते हविरित्यादिका, ज्ञानकाण्डे श्रद्धावित्तो-भूत्वाऽऽत्मन्येवात्मानं पश्येदित्यादिका।

तस्मात्सर्व्वत्र श्रद्धावत एवाधिकारः,

भक्तियोगः श्रवणकीर्तनादिः। शिवात्मकः कल्याणप्रतिपादकः। गुणवाद औपचारिकत्वम्।

सा च पुरुषभेदेन विषयभेदेषु व्यवतिष्ठते तस्माद्व्यवस्थितोऽधिकार इति। युक्तं चैतद् विधिपुरुषसम्बन्धो-वा तद्धेतुर्वा व्युत्पत्तिभेदेनाधिकारशब्दार्थ इति न्याय-विदां स्थितिः। तत्र श्रेयःसाधनलक्षणस्य विधेः स्वसाध्य-

भोग्यश्रेयोद्वारेण भोक्ता पुरुषेण सम्बन्धो विधिपुरुषसम्बन्धः, तद्धेतुर्जीवनकामनाऽऽदिः।

नियोगवादिनस्तु नियोज्यनियोगयोर्बोद्धृबोद्धव्यलक्षणः सम्बन्धो विधिपुरुषसम्बन्धः स च कर्म्मण्यैश्वर्य्यमित्येवलक्षणादधिकारादन्य एवेति मन्यन्ते।

स सर्व्वोऽपि न श्रद्धामन्तरेण संभवति, अनवगतासभावस्य पुंसो वाक्याद्विशिष्टप्रवर्त्तकविषयाद् वस्तुवृत्त्या विसंवादशून्यादपि ममेदमिष्टसाधनमिति वा ममेदं—कार्य्यमिति वा प्रतिपत्तेः प्रवृत्तेश्चादर्शनात्।

सा चेति। स स पुरुषस्तत्र तत्र श्रद्धत्त इत्यर्थः। व्युत्पत्तिभेदेनेति। अधिकरणमधिकार इति व्युत्पत्त्या विधिपुरुषसम्बन्धः। अधिक्रियते येनेति व्युत्पत्त्या तद्धेतुः। तदेव विवृणोति—तत्रेति। गुरुमते विधिपुरुषसम्बन्धं विवृणोति—नियोगेति। उभयमतेऽपि श्रद्धाऽपेक्षामाह—स सर्व इति। अनवगतेति। यस्यासत्वं न ज्ञायत—इत्यर्थः। विशिष्टेति। इष्टसाधनत्वप्रतिपादकादित्यर्थः। प्रतिपत्तेरदर्शनादित्यन्वयः।

ननु यस्य वेदस्तन्मूलं च स्मृतिपुराणादि सर्व्वं शास्त्रं प्रमाणमिति निर्णिक्तशङ्कापङ्कबुद्धिरस्ति स एव शास्त्रेऽधिक्रियते, तत्र यदि कथं क्वचिदेकदेशेऽप्यश्रद्धा तत्कथमेकदेशान्तरेऽप्यधिकारः, अपि च नैकदेशविषयिणी श्रद्धैव संभविनी, सा हि शास्त्रस्य प्रमाणान्तरसंवादनिबन्धना वा स्वतः प्रामाण्यनिबन्धना वा, न तावदाद्यः प्रमाणान्तरैर्दुरवगाहत्वादतिगहनस्य धर्म्मतत्त्वस्य, नापि द्वितीयः स्वतः प्रामाण्यस्यैकदेशान्तरेऽप्यविशेषात् तन्निबन्धना चेदभविष्यत् सर्वत्रापि श्रद्धा, न वा कुत्रचित्, तत् कथं तन्निबन्धना व्यवस्थेति?

पुराणेषु श्रद्धावतः पौराणेषु श्रवणकीर्तनादिष्वधिकारः, इतरस्य स्मार्तेष्वधिकार इत्युक्तमाक्षिपति-नन्विति। निर्णिक्तः प्रक्षालितः शङ्कापङ्को यस्याः। एकदेशे पुराणादिरूपे, एकदेशान्तरे स्मृत्यादिरूपे। एकदेशविषयां श्रद्धाम् प्रकारान्तरेण दूषयति-अपि चेति। तन्निबन्धना चेत् = स्वतःप्रामाण्यनिबन्धना चेत्। तन्निबन्धना श्रद्धानिबन्धना व्यवस्थेति।

इदमसांप्रतं धर्म्मब्रह्मविषयशास्त्रयोः प्रामाण्यस्याविशिष्टत्वेऽपि श्रद्धाया व्यवस्थितत्वात्। यो ह्यकर्त्तारमात्मानमवगमयन्तीरुपनिषदोऽपि न श्रद्धत्ते स एव कर्म्मविधीनाद्रियते, अत एव हि तस्यैव तत्राधिकारो नेतरस्य, अन्यथा हि सर्व्वस्यापि सर्वत्राधिकारोऽभविष्यद्, न च तथाऽस्ति, एवमिहापि वक्तृदोषविरहादेकतुलाऽऽरूढेषु सर्व्वशास्त्रेषु समानगरिमसूत्सर्गसिद्धाऽपि श्रद्धा कुत्र चित् कुतश्चित् प्रतिबन्धकाददृष्टादुदाहरणाभासदर्शनाचार्थान्तरपरत्वशङ्काकलङ्केन कुण्ठीक्रियते; तदुपपन्नं तन्निबन्धना व्यवस्थेति।

दूषयति—इदमिति। श्रद्धाकृतव्यवस्थामुपपादयति—यो हीति। विपक्षे बाधकमाह—अन्यथेति। कुतश्चिदित्येतद्विवृणोति—अदृष्टादित्यादिना। उदाहरणाभासैर्वा ग्रामेऽयमेक एवाद्वितीयः पुरुष इतिवदेकमेवाद्वितीयमित्यादिवेदान्तानामर्थान्तरपरत्वमिति भवति शङ्का।

भक्तेरप्यधिकारिविशेषणत्वं पुराणवचनैरेवावगम्यते, श्रीविष्णुपुराणे तावद्—

यन्नामकीर्त्तनं भक्त्या विलापनमनुत्तमम्।
मैत्रेयाशेषपापानां धातूनामिव पावक इति,

अत्र च भक्तिशब्देन भगवदालम्बनो रत्याख्यः स्थायी भावोऽभिधीयते, न भजनमात्रं तस्य कीर्त्तनशब्देनोपात्तत्वात्,

प्रह्लादचरिते चायमर्थः स्फुटतरमवगम्यते—
नाथ योनिसहस्रेषु येषु येषु व्रजाम्यम्।
तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥
इति श्लोकद्वयस्यैकवाक्यत्वाद्।

भक्तेरप्यधिकारिविशेषणत्वमाह—भक्तेरिति। विलापनं निवर्तकम्। ततश्च विष्णुभक्तस्य नामकीर्तनं सकलपापक्षयहेतुरितरस्य मन्वाद्युक्तम् प्रायश्चितमिति व्यवस्थेति भावः। भक्तिशब्दार्थमाह—अत्रेति। रतिः प्रीतिः। स्थायी भावो धर्मः। भक्तिशब्दस्य प्रीतिवाचित्वं समर्थयते—प्रह्लादेति। पूर्ववाक्ये भक्तिशब्देनोदाहृत्य प्रीतिशब्देनोत्तरवाक्ये निर्देशादिति भावः।

नन्वन्यैव भक्तिरन्यैव च प्रीतिः; निर्देशभेदादेव, अन्यथा हि पौनरुक्त्यं प्रसज्येत, अन्यच्च नेह प्रीतिः प्रार्थ्यते, अपि तु हे माप लक्ष्मीपते! अविवेकिनां विषयेषु या प्रीतिः सा त्वामनुस्मरतो मे हृदयात्सर्पतु गच्छतादिति रागनिवृत्तिः प्रार्थ्यते तत् कथमेकवाक्यत्वमिति?

भक्तिप्रीत्योर्भेदं शङ्कते—नन्विति। नेहेति। उत्तरश्लोक इत्यर्थः। मां पातीति मापः। रागनिवृत्तिस्तद्ध्वंसः। रागविरोधी चेतोवृत्तिविशेषो विरक्तिः।

असुभगमेतद्, यदि भक्तेरन्या प्रीतिः प्रार्थ्यते विरक्तिर्वा, तर्हि तस्या अपि भगवद्वाक्ये भक्तेरिवानुप्रापणेन ग्रहणेन च भवितव्यं भक्तिर्मयि तथान्येष्व भूयोऽप्येवं भविष्यतीतिवद् मयि प्रीतिस्तथान्येष्व भूयोऽप्येवं भविष्यतीति, विषयेषु विरक्तिस्तु तथान्येष्व भूयोऽप्येवं भविष्यतीति च तथा, न चैवमपश्यन्, तस्मात्पूर्वश्लोकोद्दिष्टाया भक्तेः स्वरूपवर्णनमुत्तरश्लोकेन क्रियते—

इति व्याख्येयं, तद्यथाऽनुस्मरत इति षष्ठी पञ्चमी वा पुरुषस्य हृदयस्य च विशेषणम्, प्रीतिशब्देन च सुखं वा तदभिव्यञ्जिका वा बुद्धिवृत्तिर्गृह्यते, तत्र सुखपक्षे तस्य सर्वत्रैकरूपत्वात्तदुपरागस्यैव भेदाद्विषयेष्वनुभूयमानेषु या प्रीतिर्यत्सुखमभिव्यज्यते सा त्वामनुस्मरतो मे हृदयान्माऽपसर्प्यतु नापयातु त्वदनुस्मरणेनैव तत्सुखमभिव्यज्यतामिति सुखाभिव्यञ्जकं भगवदनुस्मरणं प्रार्थितं भवति, वृत्तिपक्षेऽपि तथैव तत्रापि तत्स्वरूपसमानयोगक्षेमस्यापि तद्भेदस्य विषयावच्छेदमन्तरेणानवगमादवच्छेदकविषयान् बहिर्भाव्य प्रीतेरेवोपादानेऽविवेकिनां विषयेषु सुखसाधनेषु या प्रीतिः सा त्वामनुस्मरतो मम हृदयान्नापयातु विषयानुल्लङ्घ्य त्वामेव निरतिशयसुखात्मानमालम्बतामिति यत्तच्छब्दयोः सामानाधिकरण्यं स्फुटमेव, ततश्च पक्षद्वयेऽपि श्रीमन्मुरमथनचरणारविन्दमकरन्दमन्दाकिनीमवगाहमानस्य मनसः कोऽपि समुल्लासः स्वानन्दमाविर्भावयन् भक्तिरित्यभिहितं भवति, सा च रतिरेवेति।

दूषयति—नहीति। तस्याः प्रीतेः, विरक्तेश्च। भगवद्वाक्येऽप्येतन्न भवितव्यमित्युक्तं विवृणोति—भक्तिर्मयीति। तथा = विस्पष्टम्। पौनरुक्त्यं परिहरति—तस्मादिति। तदेव विवृणोति—तद्यथेति। षष्ठीपक्षे पुरुषविशेषणम्, पञ्चमीपक्षे हृदयविशेषणम्। प्रीतिशब्दार्थं द्वेधा निरूपयति—प्रीतीति। ननु विषयेषु यत्सुखमविवेकानां तत्कथं—भगवन्तमनुस्मरतः स्यात्तत्राह—तस्येति। सुखस्येत्यर्थः। तत्तदुपरागस्येति। उपरञ्जकतत्तदुपाधेरेवेत्यर्थः। तथैवेति। सुखाभिव्यञ्जकं भगवदनुस्मरणम् प्रार्थितम् भवतीत्यर्थः। तदेव दर्शयति—तत्रापीति। तत्स्वरूपेति। बुद्धिस्वरूपसमानयोगक्षेमस्य जन्यत्वात्। तद्भेदस्य बुद्धिवृत्तिविशेषस्य, बहिर्भाव्य व्युत्थाप्य, प्रीतेरेवेति। वृत्तिमात्रस्येत्यर्थः।

फलितमर्थमाह—विषयानिति। ततश्च भगवति प्रीतिरेव भक्तिरित्युत्तरश्लोकगतयत्तच्छब्दसामानाधिकरण्येन सिद्धमित्युपसंहरति–यत्तदिति। समुल्लासो वृत्तिभेदः।

श्रीभागवते च—

रतिरेव भक्तिरित्यवगम्यते—

देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसीत्यत्र,

तस्य ह्ययमर्थः—गुणलिङ्गानां गुणमयशरीराणामानुश्रविकं श्रुतिपुराणादिगम्यं कर्म्म चरितं येषां ते तथोक्ताः तेषां देवानां मध्ये सत्त्व एव शुद्धसत्त्वमय—मङ्गलमूर्तौ सरस्वतीतीरवासिभृगुमुख्यमुनिजनसिद्धान्तप्रसिद्धमहिम्नि श्रीवत्सलाञ्छन एकमनसः पुरुषस्य एकाग्रस्य वा मनसो या वृत्तिरनिमित्ता फलाभिसंधिशून्या स्वरसत एव विषयसौन्दर्य्योदयलेनैव जायमाना न बलादापाद्यमाना सा भागवती भक्तिः सा च सिद्धेर्ज्ञानाद् गरीयसीति। गरीयस्त्वमेव विवृणोति—

जरयत्याशु या कोशं निगीर्णमनलो यथेति।

यथा निगीर्णमन्नपानादि जाठरो जातवेदा जरयति तथा या कोशमन्नमयादि पञ्चप्रकारमाशु नाशयति, अनुभवशिरस्कत्वाद्, न ज्ञानमिव तत्त्वयुक्तिभिः क्रमेणैकैकमपोहति, ततश्च तस्या गरीयस्त्वे कतमः सन्देह इति, मुक्तेर्गरीयसीति वा व्याख्येयम्,

सालोक्यसार्ष्टिसामीप्यसायुज्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जना—

इत्यादिदर्शनात्। जरयत्याशु या कोशमिति तु स्वय-

मेव भक्तिरन्विष्यमाणा मुक्तिं बलादविलम्बेनापादयतीति दर्शयति। एवंलक्षणश्च मनसः परिणामः कथं नु रतेरन्यः स्याद्।

भागवतपर्यालोचनयाऽपि रतिरेव भक्तिरित्याह—श्रीभागवत इति। देवानाम् ब्रम्हविष्णुमहेशानाम्। शुद्धसत्त्वमयत्वं विवृणोति—सरस्वतीतीरेति। भृगुणा हि विष्णुवक्षसि पदाघातः कृतः विष्णुस्तु भूषणत्वेनाङ्गीकृतवानतः शुद्धसत्त्वमय इति भावः। फलाभिसन्धिशून्या चेद्भक्तिः कथं जायेत ? तत्राह—स्वरसत एवेति। सार्ष्टिः सारूप्यं, सायुज्यं तादात्म्यम्, एकत्वमभेदः। उपसंहरति—एवमिति।

अन्या व्याख्या—एकमनसः पुंसो देवानां या वृत्तिः सा भक्तिरित्यन्वयः, तत्र देवशब्दस्य नानाऽर्थत्वादिन्द्रियग्रहणार्थमुपपदं गुणलिङ्गानामिति, शब्दादिग्रहकारणानामित्यर्थः। अनेनैव कर्मेन्द्रियाणामपि ग्रहणं छत्रिन्यायेन, कर्म्मशब्देनैव बुद्धेरपि, अन्यथा विशेषणविशेष्ययोरनन्वयप्रसङ्गात्। कर्म्म कर्तव्यं, तच्च द्विविधं—दृष्टमानुश्रविकं च, तत्र प्रत्यक्षादिभिः कर्त्तव्यत्वेनावगतं दृष्टं, यस्य तु शास्त्रादवगम्यते कर्त्तव्यत्वं तदानुश्रविकं, तत्र रागादिनिबन्धनप्रवृत्तिवारणार्थं विशेषणमानुश्रविककर्मणामिति, आनुश्रविकेऽपि काम्ये रागादिनिबन्धनत्वात्प्रवृत्तेस्तन्निवृत्तये विशेषणमनिमित्तेति, अनिमित्ताऽपि कदा चिदन्यदेवताऽऽलम्बनी वृत्तिः स्याद् न च सा भागवती भक्तिरत आह—सत्त्वएवेति। शेषं पूर्व्ववत्।

व्याख्यानान्तरमाह—अन्येति। छत्रिन्यायेनेति। छत्रिणो गच्छन्तीत्यत्र यथा छत्रिशब्दः छत्र्यच्छत्रिसमुदायलक्षकः, एवं गुणलिङ्गशब्दोऽपि कर्मेन्द्रियज्ञानेन्द्रियसमुदायलक्षकः। तद्विशेषणमानुश्रविककर्मणामिति। तत्र कर्मशब्दो बुद्धिवृत्त्युपलक्षणमित्याह—कर्मेति।

अन्यथेति। ज्ञानेन्द्रियाणां कर्माभावादिति भावः। इन्द्रियाणाम् भगवति वृत्तेः क्रममाह—तच्चेति।

अनेनैव क्रमेण श्रीमदच्युते चित्तावतारस्य विवक्षितत्वाद्, न प्रातिलोम्येन विशेषणानर्थक्यं शङ्कनीयम्। अयमत्र निष्कर्षः—रागादिदोषनिबन्धनाभ्यः प्रवृत्तिभ्यः परावृत्तानां श्रुतिपुराणवैष्णवागमविहितश्रवणादिकर्म्मप्रवणानामिन्द्रियाणां किं चिदपि फलमनभिसन्दधानानां सकलभुवनसौभाग्यसारसर्व्वस्वमूर्त्तौ मुरमर्द्दने परिचयप्रचयादनपेक्षितविधिः स्वरसत एव समुल्लसन्ती विषयान्तरैरव्यवच्छिद्यमाना वृत्तिर्भागवती वृत्तिर्भक्तिरिति। तत्र बहिरिन्द्रियाणां श्रवणादिव्यतिरेकेण वृत्त्यभावात् श्रवणादीनां चान्योन्यं भिन्नजातीयत्वान्मनोवृत्तेस्तु भावलक्षणायाः सर्व्वत्रैकरूपत्वाद् मनोवृत्तिरेव मुख्यो भक्तिशब्दार्थः, श्रवणादिषु तु तदनुविधानादेव भक्तिशब्द इति।

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते।
स्वभावगुणमार्गेण पुंसां भावो हि भिद्यत—

इत्यनेनापि भक्तिभावयोरभेद एवावगम्यते, अन्यथा हि भक्तेर्वैविध्यं प्रतिज्ञायौत्पत्तिकसत्त्वादिगुणभेदेन भावभेदप्रतिपादनायोगात्,

अनेनेति। उक्तेनेत्यर्थः। प्रातिलोम्येनेति। अन्तिममेव विशेषणमस्त्विन्द्रियाणां, भागवती वृत्तिर्भक्तिरिति न शङ्कनीयमित्यर्थः। निष्कर्षः तात्पर्यार्थः। एवं सामान्यतः सर्वेन्द्रियवृत्तेर्भगवद्विषयाया भक्तिशब्दव्यपदेश्यत्वमुक्त्वा तत्रापि विशेषमाह—तत्रेति। श्रवणादीनामननुगतत्वात्तेष्वनुस्यूता मनोवृत्तिरेव भक्तिशब्दवाच्येति भावः। युक्त्यन्तरेणाह—भक्तियोग इति। भावो मनोरुचिः। वैविध्यमनेकत्वम्।

श्रीनरसिंहपुराणेऽपि—इक्ष्वाकुचरिते-

चकार मेघे तद्वर्णे बहुमानरतिं नृपः ।
पक्षपातेन तन्नाम्नि मृगे पद्मे च तादृशी-

त्यादिप्रेमातिशयस्यैव भक्तित्वं दर्शितम्,

श्रीस्कन्दपुराणेऽपि

बीभत्सिते दुर्विषये कदाचि-
द्यो वाऽपि रागो भविता जनस्य ।
स चेद् भविष्यत्यपि नाम रुद्रे
को नाम मुक्तो न भवेद्भवाब्धेरि-

त्येतदेव दर्शितं भक्तिप्रक्रमात्,

श्रीलिङ्गादिषु च—

स्वरनेत्राङ्गविक्रियेत्यत्रानुभावानामनुक्रान्तत्वात् तेषां च भावानामङ्गभावादङ्गी भाव एव भक्तिरिति गम्यते। स चायमाद्यो भावो वृत्त्यन्तरैरन्तरा निविशमानैरप्यनेकजन्मवासनावासिते चेतसि न व्यवच्छिद्यमानो विभावादिभीरसरूपतामापाद्यमानो निजसुखसंविदा निर्भरमालिङ्गितः स्वयमेवानन्दसंविदभिधानमुपचारासहं दधानो भक्तिरित्यभिधीयते ।

तद्वर्णे कृष्णसदृशवर्णे। तन्नाम्नि कृष्णनाम्नि, तद्दृशि कृष्णदृक्तुल्य इत्यर्थः। सोऽपि चेद्रुद्रे भविष्यतीति संबन्धः। स्वरविक्रिया सगद्गदत्वम्। नेत्रविक्रिया अश्रु, अङ्गविक्रिया रोमाञ्चाः। भक्तेरनुक्षायमाना भावा अनुभावाः। भावाङ्गभावाद् = भक्त्यङ्गत्वात्। अङ्गी प्रधानम्। आद्य इत्यनुभावापेक्षया, वृत्त्यन्तरैर्विषयविषयैर्न व्यवच्छिद्यमानः। तत्र हेतुरनेकजन्मेति।

तस्य चालम्बनविभावोऽयज्ञाऽऽकृष्टकुसुमायुधसौन्दर्यसर्वस्वः कमलाकुचतटीपत्रभङ्गो भगवाननन्तो वा

मनागवलोकनखर्व्वीकृतमदनगर्व्वो मुग्धमृगलाञ्छनशेखरः शंकरो वा, तावपि श्रुतिपुराणवाक्यैः कर्णाभ्यर्णमवर्तीर्णौ वा; अभिनयैरभिनयप्रतिभानमार्गमनुसरन्तौ वा मज्जन्मकर्म्माभिनयइत्येतदर्थमेवाभिनयनस्य विहितत्वात्। उद्दीपनविभावास्तु विलसदमलमरकतमणिमरीचिमञ्जरीपिञ्जरालिभ्रान्तिभूमयो निर्यन्मकरन्दविन्दुजालजम्बालितगगनाङ्गनाः परिमलतर्पितपवनातिथयस्तरुणतुलसीवनवीथयः, मुरमथनरथाङ्गलाञ्छनच्छटापरिष्वङ्गसुव्यङ्ग्यसौभाग्यश्रेणिश्रीमद्गोपीचन्दनविदलानि, प्रसिद्धसकलाभरणसौन्दर्य्यसर्व्वस्ववञ्चनचणा नयनाह्लादिन्यो नलिनाक्षमालाश्च, हरनयनदहनदग्धसहचरस्मरविरहशुष्कावशिष्टकतिपयकलस्य कलावतः कलाभरचूर्णचय इव धवलिम्ना बहिरन्तस्तमसी तिरो दधानं-मनोमुकुरमण्डलीमुज्ज्वलां विदधद् भासुरं भसितं,-सकलपुरुषार्थसंपत्सुरलतावीजश्रेणीश्रियो रुद्राक्षमालाश्च, हरिदिनहरयामिनीमहोत्सवादयश्च। अनुभावाव्यभिचारिणश्च भरतादिमुनिमनीषिताएव न पुनरिहाभिनवाः, सर्व्वेषां चैतेषामुदाहरणानि श्रीभागवते स्फुटतरमुपलभ्यन्ते; पुराणान्तरेषु च केषां चित्, तत्रालम्बनविभावस्य च—

स्वयं त्वसाम्यातिशयस्त्र्यधीशः
स्वाराजलक्ष्म्याप्तसमस्तकामः ।
वलिं हरद्भिश्चिरलोकपालैः
किरीटकोट्यर्हितपादपीठः ॥

इत्यादि । उद्दीपनविभावस्य च—

तस्यारविन्दनयनस्य पदारविन्द—
किञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः स्वविवरेण चकार तेषां—
सङ्क्षोभमक्षरजुषामपि चित्ततन्वो—

रित्यादि ।

एवंव्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गाय—
त्युन्मादवन्नृत्यति लोकबाह्य—

इत्यादि । स्वरनेत्रगात्रविकाररूपाणामनुभावानां-तत्रापि सात्त्विकाना—

क चिदुत्पुलकः तूष्णीं प्रेमप्रसरसम्प्लुतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षण इत्यादि,

निर्वेदादीनां च व्यभिचारिणां—

क चाऽहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क च नारायणेत्येतद् भगवन्नाममङ्गलमित्यादि ।

एवं शैवेऽपि—

अस्ति कश्चिदपर्यन्तरमणीयगुणार्णवः ।
षड्विधाध्वमयस्यास्य सर्वस्य जगतः पतिः ॥
आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा ।
अखण्डजगदण्डानां पिण्डीकरणपण्डितः ॥
अनन्तानन्दसन्दोहमकरन्दमधुव्रतः ।
औदार्यधैर्यगाम्भीर्यमाधुर्यमकरालयः ॥

इत्यादीन्यालम्बनादीनामुदाहरणानि ।

विभावो जनको भाव । आदिशब्देनानुभावव्यभिचारिभावग्रहणम् । निजस्य सुख तदेव सविद्, अत एवानन्दसंविदित्यभिधा

नम्। शृङ्गारादिरसेषु प्रमदाऽऽदिरिवात्रालम्बनविभावः श्रीगोविन्दः शंकरो वेत्याह–तस्येति। तयोरालम्बनत्वमुपपादयति—तावपीति। अभिनयैरनुकारप्रदर्शनैः, स्वकर्तृकैः परकर्तृकैर्वा। अभिनेयानां तत्तत्परमेश्वरचरित्राणां प्रतिभानं स्फुरणं तन्मार्गो विषयता, यथा कथं चिदुपस्थितः परमात्माऽऽलम्बनविभावो भक्तिरसस्येत्यर्थः। मरीचीनां मञ्जर्यस्तद्वत्पिञ्जरा अलयस्तेषां भ्रान्तिर्भ्रमणं तन्मयः, निर्यन्तो निर्गच्छन्तो मकरन्दस्य विन्दवस्तेषां जालानि तैर्जम्बालितं शबलीकृतं गगनमेवाङ्गनं याभिः, परिमलेन तर्पितः पवनो याभिस्ताः प्रथमान्तत्रयं वीथीनां विशेषणं, रथाङ्गं सुदर्शनं तदीयलाञ्छनच्छटानां परिष्वङ्गः सम्बन्धस्तेन सुव्यङ्गया सौभाग्यश्रेणिर्यैस्तानि गोपीचन्दनविदलानि खण्डानि। सौन्दर्यसर्वस्वस्य वञ्चने चणा निपुणाः। नलिनं पद्मम्। शिवभक्तिरसस्योद्दीपनविभावमाह—हरेति। हरमस्तकचन्द्रः पूर्वं पूर्णकल एवासीद्धरनेत्राग्निना दग्धस्य मदनरूपस्य सहचरस्य विरहेण काश्चन कलाः क्षीणास्तासां चूर्णानीव भसितं, मुकुरो दर्पणः। भरतादीनां शृङ्गारादिरसनिरूपकाणामभिमता एवानुभावादय इति। अक्षरं निर्गुणं ब्रह्म। अनुभावोदाहरणमाह—एवंव्रत इति। तदवान्तरभेदानामुदाहरणमाह—तत्रापीति। षड्विधेति। कामक्रोधमदमोहलोभमत्सरात्मकषड्विधपापमयस्येत्यर्थः। आत्मेति। स्वगुणामृतास्वादप्रमत्ता भक्तास्तेषु रसिको वत्सलः, युवा जरारहितः, पिण्डीकरणम् = एकीकरणं संहारो, मधुव्रत इव मधुव्रतः पूर्णानन्द इत्यर्थः। मकरालयः = समुद्रः, एतादृशः शिव आलम्बनं विभावः।

एवं स्थिते यत्कैश्चिदुक्तं भक्तिरुत्साहेऽन्तर्भवतीति तल्लौकिकभक्त्यभिप्रायं, तस्य समरार्थमेव स्वामिना स्वीकृतत्वाद्, इह तु न तथा,

यथोक्तं श्रीमता प्रह्लादेन

अहं त्वकामस्त्वद्भक्तस्त्वं तु स्वाम्यनपाश्रयः।
नान्यथेहावयोरर्थो राजसेवकयोरिवेति,

तस्माद्रत्याख्यो भावो भक्तिरिति।

सेवाजनक उत्साहो भक्तिरिति मतान्तरं दूषयति—एवमिति। लौकिकेति। राजसेवाऽऽदिसंबद्धा भक्तिरुत्साहेऽन्तर्भवतीत्यर्थः।

राजादिः समराद्यर्थं सेवकं स्वीकरोति तच्च नोत्साहमन्तरेण सेवकस्य संभवतीति भावः। अहं त्विति। राजसेवकौ हि स्वस्वकार्योद्देशेन प्रवर्त्तेते नैवमावयोरित्यर्थः।

ननु श्रीविष्णुपुराणे विहिताचरणं प्रतिषिद्धवर्जनं च भक्तिरित्युक्तं—

न चलति निजवर्णधर्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे।
न हरति न च हन्ति किं चिदुच्चैः
सितमनसन्तमवेहि विष्णुभक्तमित्यादौ,

सत्यमुक्तम्, उपलक्षणं तु तत् शाखाऽग्रमिव चन्द्रस्य न स्वरूपं भक्तेः प्रकृष्टः प्रकाश इव, भावलक्षणाया भक्तेः पृथगुपादानाद्,

मनसि कृतजनार्दनं मनुष्यं—
सततमवेहि हरेरतीव भक्तमिति।

अत्र हि सततं मनसि कृतजनार्दनमिति संबन्धः, सातत्यं च न भावमन्तरेणावकल्पते, अतीव भक्तमिति च स एव मुख्यो भक्त इति दर्शयति, सममतिरात्मसुहृद्विपक्षपक्ष इति च सर्वात्मनि वासुदेवे भावमन्तरेण नोपपद्यते, उपपद्यते चोपलक्षणत्वम्। विधिप्रतिषेधातिक्रमो हि रागादिनिबन्धनः, न च पुरुषोत्तमप्रवणे चेतसि रागादयोऽवकाशं लभन्ते, अत एवाभाणि भगवता श्रीशुकेन—

विकर्म्म यच्चोत्पतितं कथं चि—
द्धुनोति सर्वं हृदि सन्निविष्ट इति।

लोकेऽपि भक्तसेवकयोर्भेदो दृश्यते, समानेऽपि राजसेवाकर्म्मणि भक्तोऽयमभक्तोऽयमिति व्यपदेशदर्शनात्, तस्माद् भाव एव भक्तिः। सा च कीर्त्तनाङ्ग-

यन्नामकीर्त्तनं भक्त्येतिश्रुतेः, न चासाविच्छया संपादयितुं शक्यते, अतोऽनुपादेयत्वादर्थादधिकारिविशेषणं भविष्यति फलवत्। एतदेव स्पष्टीकृतं—

के चित्केवलया भक्त्या वासुदेवपरायणा इति।

अत्र वासुदेवपरायणा इति तदेकलक्षणस्य भावस्याधिकारिविशेषणभावेनोद्देशः, भक्त्येति भजनक्रिया कीर्त्तनादिरादीयते, के चिदिति च दुःसंपादत्वेनाधिकारिविशेषणमेव दर्शयति—

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः।
विकर्म्म यच्चोत्पतितं कथं चिद्धुनोति सर्व्वं हृदि सन्निविष्ट-

इति। तत्रापि त्यक्तान्यभावस्येति भावस्योद्देशः, भजत इति कीर्त्तनादेरुपादानं, तस्माद् भक्तस्यैवाधिकारः। ज्ञानस्याप्यधिकारहेतुत्वमवगम्यते, "यतस्तद्विषया मतिः"रिति यतो नाम्नस्तद्विषया मतिर्भवति, तस्य नाम्नो व्याहरणं पापक्षयहेतुरित्यतो यस्य तज्ज्ञानमस्ति स एवाधिकारीत्यर्थादुक्तं भवति,

तदुत्तमश्लोकगुणोपलम्भक—

इति ज्ञानवतो हरेर्नामपदैस्तद्वाचकैः शब्दैरुत्तमश्लोकं तद्गुणांश्चोपलभते यः; स एवात्राधिकारीति व्यक्तमवगम्यते, ज्ञानं चात्र परोक्षपदार्थमात्रविषयं न पुनरपरोक्षमौपनिषदम्, एवं च श्रद्धाभक्तिज्ञानसंपन्नस्याधिकारिणः पौराणं प्रायश्चित्तमितरस्य तु स्मार्त्तमिति व्यवस्थितम्।

प्रकृष्टप्रकाशो यथा चन्द्रस्य स्वरूपं न तथैतदित्यर्थः। उपसंहरति—तस्मादिति। प्रकृतमाह—सा चेति। तावता कथमधिकारिविशेषणत्वम्? तत्राह—न चेति। असौ भक्तिः। भक्त्येति वासुदेवपरायण·

इत्यनयोरर्थभेदमाह—तत्रेति। उद्देशोऽभिधानम्। ज्ञानस्येति। नामोच्चारणं पापक्षयहेतुरित्यस्य परमेश्वरज्ञानस्य चेत्यर्थः।

ननु, भवतु स्मृतिपुराणवचनानामन्योन्यविरोधव्यवस्थेयम्, इह पुनः पुराणवचनानामेवान्योन्यविरोधो—विलोक्यते—कानि चित्सकृत्कीर्त्तनादेव पापक्षयमभिदधति, कानि चिदावर्त्त्यमानानीति, तथा हि—

श्रीलैङ्गे—

ॐ नमो नीलकण्ठाय इति पुण्याक्षराष्टकम्।
मन्त्रमाह सकृद्यस्तु पातकैः स विमुच्यत इति।

श्रीभागवते तु

हरेर्गुणानुवादः खलु सत्त्वभावन इति,
नातः परं कर्म्मनिबन्धकृन्तनं—
मुमुक्षतां तीर्थपदानुकीर्त्तनादिति च,

कस्तत्र विरोधपरिहार इति?

उच्यते। तत्राप्यनुतप्तानुतप्तविषयत्वेन व्यवस्था, तथा हि श्रीवैष्णवे "कृष्णानुस्मरणं परमि"त्यविशेषेण प्राप्तामावृत्तिमनुतप्तविषयेऽपवदति

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परमिति,
अतोऽननुतप्तविषयैव सा व्यवतिष्ठते।

प्रकारान्तरेण शङ्कते—नन्विति। अनुतप्तस्य सकृन्नामकीर्तनमितरस्यावर्त्यमानमिति परिहारग्रन्थार्थः। अननुतप्तविषयैव सा, आवृत्तिरित्यर्थः।

ननु नेह निर्द्धारणमावृत्तेः, इयतो वारानितीयन्तं कालमिति वा, ततश्च कथमनिर्द्धारिता सा विधीयते? नापि यावत्फलमावृत्तिरवघातादाविव, पापक्षयनिवृत्तेरपि शास्त्रैकगम्यत्वात्,

उच्यते। आवृत्तिश्रवणादेव पापतारतम्यादावृत्तितारतम्यं कल्प्यते, श्रूयते च तदष्टाक्षरब्रह्मविद्यायाम्—

गोमूत्रयावकाहारो ब्रह्महा मासिकैर्जपैः।

पूयते तत एवार्वाङ् महापातकिनोऽपर,—

इत्यादि, तस्माद्यस्य पापं कृतवतो भाराक्रान्तस्येव न कदाचिदितः परं पापे प्रवर्त्त इति पश्चात्तापो जायते तस्य सकृत्कीर्त्तनं शोधनम्, इतरस्य पुनरावर्त्यमानमिति।

आवृत्तिस्वरूपेऽविनिगमं शङ्कते—नन्विति। पापतारतम्येनावृत्तितारतम्यमिति समाधत्ते—उच्यत इति।

नन्वेवमपि

सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा।

वैकुण्ठनामग्रहणमशेषाघहरं विदुरि—

त्येवमादीनां का गतिः? परिहासानादरयोर्हि न भक्तिश्रद्धाऽनुतापाः सम्भवन्ति, स्तोभसांकेत्ययोस्तु न ज्ञानमपि, आवृत्तिरपि नापेक्ष्यते

यद् ब्रह्मक्षरं नाम गिरेरितं नृणां—

सकृत्प्रसङ्गादघमाशु हन्ति तद्।

पवित्रकीर्त्तिं तमलङ्घ्यशासनं—

भवानहो द्वेष्टि शिवं शिवेतर—

इति सकृच्छब्दप्रयोगादाशुशब्दाच्च श्रद्धादयोऽप्युपेक्षिताः। अस्य ह्ययमर्थः—यदिति व्यस्तमव्ययं, यस्य नाम द्व्यक्षरं सुखोच्चार्यं, तदपि गिरेरितं न तु हृदयेन तदर्थमवधार्य; तच्च सकृन्न बहुवारं; तदपि प्रसङ्गान्न तु श्रद्धादेः; अघम्, अवधीरितमहदल्पभेदम् आशु शीघ्रमेव न तु कालान्तरव्यवधानेन हन्ति हिनस्ति तत्रापि न नामिनश्चित्तमावर्ज्य किन्तु तत्स्वयमेव, तच्च सर्वेषां नृणां न

द्विजानामेव, किं च कियदेतद् यदुत पापक्षयहेतुरस्य नामेति, अयं हि पवित्रकीर्तिः पराग्भावेन प्रतिपन्नः परमेश्वर एव पवित्रं "महद् भयं वज्रमुद्यतमि"ति श्रुतेः,

भूतानां महदादीनां यतो भिन्नदृशां भयमिति

स्मृतेश्च। तस्मात् त्रायते भक्तं भेदभ्रान्तिमुन्मूल्य निरातङ्के निजमहिमन्यवस्थापयन्ती कीर्त्तिर्यस्य स पवित्रकीर्त्तिस्तं पवित्रकीर्तिं ब्रह्मादीनामप्यनतिक्रमणीयशासनं शिवं परममङ्गलं भवान् द्वेष्टीति अहो शिवेतरइति वाक्यान्तरं शिवेतरः पर्य्युदस्तमङ्गलः, अमङ्गल इति यावद्। अन्येऽप्यमङ्गलाः सन्ति, अयं पुनरपूर्व्वोऽमङ्गलइति दक्षं देवी निन्दति। न चैषामतत्परत्वम्, अभ्यासाद् गतिसामान्याच, अभ्यासस्तावदजामिलोपाख्याने—

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेरिति,

निर्वेशो भोगः, "निर्वेशो भृतिभोगयोरिति नैघण्टुकाः, स च प्रायश्चित्त उपचर्य्यते, भोगप्रायश्चित्तयोः कर्मनाशहेतुत्वाविशेषाद् अत्र विवश इति विवक्षितं, विवशस्य तु न श्रद्धाऽऽदयः सम्भवन्ति

एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम्।
यदा नारायणेत्येतज्जगाद चतुरक्षरमिति,

अघोनः अघवतः, एतेनैवेति श्रद्धाविरहः, यदा जगाद तदैवेति अनावृत्तिः, चतुरक्षरमिति च श्रद्धाऽनपेक्षा, अक्षरसमाहारस्यैव विवक्षितत्वात्, संख्याकथनस्य चाधिकमिदमित्यभिप्रायः, एवमस्मिन् प्रकरणे भूयानभ्यासः।

श्रद्धाऽऽदिमतः संकीर्त्तनेऽधिकार इत्यत्र विरोधं शङ्कते—नन्वेवमिति। आवृत्त्यादिप्रतिपादकवाक्यानां विरोधं निरूपयति—आवृत्तिरपीति। तत्र हेतुः—सकृच्छ्रुद्धप्रयोगादिति। व्यस्तं = पृथक्पदम्। श्लोकस्य पदशस्तात्पर्यव्याख्यानं सुगमम्। न चैषामिति। सांकेत्यादिवाक्यानामतत्परत्वं श्रद्धाऽऽद्यनपेक्षत्वपरत्वमिति न च वाच्यम् अभ्यासादेकत्रैव ग्रन्थे पुनःपुनः श्रवणात्, गतिसामान्याद्धि ग्रन्थान्तरे च गतिसामान्यादित्यर्थः। अभ्यासं प्रपञ्चयति—अभ्यासस्तावदिति। चतुरक्षरमित्यत्राक्षरग्रहणस्य तात्पर्यमाह—चतुरक्षरमिति। चतुस्संख्यायास्तात्पर्यमाह—संख्येति। एकेन द्वयेन वा पापनिष्कृतिसंभवाच्चतुष्टयमधिकमिति भावः।

नन्वेकस्माद्वाक्याद्यावानर्थोऽवगम्यते किं तावानेवान्यस्मादपि; उताधिकः? यदि तावदधिकस्तर्हि नाभ्यासस्तस्यैव तत्र विधेयत्वात्, उक्तस्यैव पुनरुक्तिरभ्यासः। अथ तावानेव तथाऽपि नतरामभ्यासः, भिद्यते, हि तदा वाक्यार्थः; "एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यादि"ति न्यायेन, "आनन्दमयोऽभ्यासादि"त्यत्र तु ब्रह्मणो दुर्भेदत्वात् दुर्बोधत्वाच्च व्यतिरेकेणान्वयेन च पुनः पुनरुपादानं न विरुध्यते

"असन्नेव स भवति असद् ब्रह्मेति वेद चेद्
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि"ति

इह तु न तथेति, तदयुक्तम् इहापि विधेयस्यैकत्वेऽपि सुकरत्वेनाश्रद्धातिरस्कृतत्वात्, "नीहारमिव भास्करः" "दहत्येधो यथाऽनलः" "यथा गदं वीर्य्यतममि" त्यादिभिरुदाहरणैरुपपत्तिभिश्च पुनः पुनः प्रतिपादनं न विरुध्यते, एवमभ्यासो निरवद्यः। गतिसामान्यं च स्कन्दोक्तेः—

अवशेनापि संकीर्त्य सकृद्यन्नाम मुच्यते।
भयेभ्यः सर्वपापेभ्यस्तं नमाम्यहमच्युतम्॥

अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिवेति ॥

श्रीनारदीये च—

हरिरिति सकृदुच्चरितं दस्युच्छलेनापि यैर्मनुजैः ।
जननीमार्गं मुक्त्वा मम पदवीं निविशते मर्त्यः ॥

एवं सर्वत्र ।

अभ्यासमाक्षिपति—नन्विति । एकस्यैवेति । एकस्य पुनः श्रुतिरेव भेदिका, अविशेषाद् = विधेयविशेषाभावात्, किं ततस्तत्राह—अनर्थकं हि स्याद्, यथा समिधो यजति तनूनपातं यजतीभ्यासस्यैकार्थतात्पर्यगमकत्वं दृश्यतेऽत आह—आनन्दमय इति । असन्नेवेति व्यतिरेकः । अस्ति ब्रह्मेत्यन्वयः । इह तु न तथा, दुर्बोधत्वादित्यर्थः । तिरस्कृत्यादिति पञ्चम्यन्तं न विरुध्यत इत्यनेन संबध्यते । न केवलं दुर्बोधत्वमभ्यासहेतुः किं तु सुकरत्वेनाश्रद्धेयत्वशङ्काऽपीति भावः । गतिसामान्यं निरूपयति-गतीति ।

अत एतेषु कोऽधिकारी तत्रेति ?
अत्रोच्यते—आसन्नमरणोऽधिकारी,
विक्रुश्य पुत्रमघवान्यदजामिलोऽपि
नारायणेति म्रियमाण उपैति मुक्ति—
मिति दर्शनाद्,
यस्यावतारगुणकर्मविडम्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति ।
तेऽनेकजन्मशमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥
इति च,
श्रीनारदीये—
ब्राह्मणः श्वपचीं भुञ्जन् विशेषेण रजस्वलाम् ।
अश्नाति सुरया पक्वं मरणे हरिमुच्चरन् ॥

मुच्यते पातकात्तस्मान्नात्र कार्या विचारणेति

निर्धारणाच्च, युक्तं च तस्मिन्नवसरे श्रद्धादिनैरपेक्ष्यं नाम्न एव सुदुर्लभत्वात्, तस्मान्न केन चित् किञ्चिद्विरुध्यत इति सर्वं सुस्थम्। एवं मध्यमश्रद्धानामधिकारिणां मनांसि समाधातुमुत्प्रेक्षते पन्थानमविरोधस्य। अन्य एव पुनः पन्थाः पारमार्थिकः, तथा हि स्मृतिपुराणविरोधे व्यवस्थादयो नैव निविशन्ते, विषमं हि प्रामाण्यमनयोः, वेदादवगतेऽर्थे पदान्तरैरुपनिबद्धानि महर्षिवाक्यानि खलु स्मृतयः; पुराणानि पुनर्वेदा एव श्रीमहाभारते मानवीये च—

इतिहासपुराणभ्यां वेदं समुपबृंहयेदिति

वचनात्, पूरणात्पुराणमिति व्युत्पत्तेश्च, न चात्रावेदेन वेदस्य बृंहणं संभवति, न ह्यपरिपूर्णस्य कनकवलयस्य त्रपुणा पूरणं संभवति।

ननु यदि वेदशब्दः पुराणमितिहासं चोपादत्ते तर्हि पुराणमन्यदेवान्वेषणीयं; यदि तु न, न तर्हि इतिहासपुराणयोरभेदो वेदेन ?

उच्यते—विशिष्टैकार्थप्रतिपादकस्य पदकदम्बकस्यापौरुषेयत्वादभेदेऽपि स्वरक्रमभेदाद् भेदनिर्देशोऽप्युपपद्यते, अपि च साक्षादेव वेदशब्दः प्रयुक्तः पुराणेषु—

"पुराणं पञ्चमो वेदः",

"इतिहासपुराणं च पञ्चमो वेद उच्यते",

"वेदानध्यापयामास महाभारतपञ्चमानि",

त्यादौ, अन्यथा पञ्चमत्वं च नावकल्पेत, समानजातीयनिवेशित्वात् संख्यायाः, ब्रह्मयज्ञाध्ययने च विनि-

योगो दृश्यतेऽमीषां यद् "ब्राह्मणानीतिहासान्पुराणानी" ति, सोऽपि नावेदत्वे संभवति, अत एवाह भगवान्—

कालेनाग्रहणं मत्वा पुराणस्य द्विजोत्तमाः!।
व्यासरूपमहं कृत्वा संहरामि युगे युगइति

पूर्वसिद्धमेव पुराणं सुखग्रहणाय संकल्पयामीति हि तस्यार्थः। मात्स्यं कौर्ममित्यादि समाख्यास्तु प्रवचननिबन्धनाः; न तन्निर्माणनिबन्धनाः, काठकादिवद्, आनुपूर्वीनिर्माणनिबन्धना वा, अत एव श्रुतिपुराणविरोधे पुराणदौर्बल्यमानुपूर्वीभेदात्कदाचिदर्थोऽप्यन्यथा स्यादिति, स्मृतिपुराणविरोधे पुनः पुराणान्येव बलीयांसि।

अत इति। अद्धाद्यपेक्षायाः असंभवाद्। एतेषु = सांकेत्यादिनिग्रन्थेषु नामोच्चारणेषु कोऽधिकारीत्यर्थः। तत्र नामोच्चारणे। मध्यमाधिकारिणां मनःसमाधानाय परिहरति-अत्रोच्यत इति। वस्तुतः संमाधानमाह—अन्य एवेति। तत्र केचन मन्दाः पुराणेषु स्मृत्यपेक्षमपकर्षं वदन्ति तन्निराकर्त्तुं पुराणेष्वाधिक्यं संभावयति-तथा हीति। आदिशब्देन विकल्पादि। तावता कथं वेदत्वं तत्राह—न चात्रेति। इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्यत्र वेदशब्दो नेतिहासपुराणयोः संग्राहकस्तयोर्भेदनिर्देशादतो भेद एव वेदादेतयोरिति शङ्कते—ननु यदीति। ब्राह्मणपरिव्राजकन्यायमभिप्रेत्य समाधत्ते-विशिष्टेति। स्वरेति। अनियतस्वरोच्चारणं पुराणानां स्वरभेदः, आनुपूर्वीभेदः क्रमभेदः। तदेतदुभयं प्रत्यक्षमेव। कथं तर्हि मात्स्यं कौर्ममित्यादिसमाख्यास्तत्राह—मात्स्यमिति। एवं हि पुराणेषु दृढकर्तृस्मरणमनुपपन्नम्, इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्यस्य वेदार्थनिर्णायकत्वाभिप्रायत्वात्, पुराणं पञ्चमो वेद इत्यस्य वेदवत्प्रामाण्यनिर्णयार्थत्वात्। पौरुषेयाणामपि धारयाऽनादिसिद्धत्वाद् ब्रह्मयज्ञविधिविषयत्वोपपत्तेः पक्षान्तरमाह-आनुपूर्वीति। पूर्वोक्तेभ्य एव हेतुभ्यः पुराणबलीयस्त्वमाह-स्मृतीति।

एवं समुल्लङ्घितसकलशृङ्खलेषु यथास्वमेव स्वं स्वमर्थमभिदधानेषु पुराणवचनेषु मनागपि क्वचिदेकमवकाशम-

लभमानानां स्मृतीनां यदि नाम विषयसर्व्वस्वापहारः प्रसज्ज्येत? प्रसज्ज्यतां नाम, कथन्नु पुराणानामाञ्जस्यमुपमृद्य व्यवस्थापनप्रस्तावः, उक्तं हि नारदीये—

वेदार्थादधिकं मन्ये पुराणार्थं वरानने!।
वेदः प्रतिष्ठितो देवि पुराणे! नात्र संशयः॥
पुराणमन्यथा कृत्वा तिर्य्यग्योनिमवाप्नुयात्।
सुदान्तोऽपि सुशान्तोऽपि न गतिं प्राप्नुयात्क
चिदिति, स्कान्दे च
श्रुतिस्मृती हि नेत्रे द्वे पुराणं हृदयं स्मृतम्।
श्रुतिस्मृतिभ्यां हीनोऽन्धः काणः स्यादेकया विना॥
पुराणहीनाद् हृच्छून्यात्काणान्धावपि तौ वरौ।

ननु न वयं व्यवस्थापयामः; अपि तु पुराणवचनान्येव व्यवस्थापयन्ति तावत्कर्म्माणि कुर्व्वीतेत्येवमादीनि? मैवं, तेषां मुमुक्षुविषयत्वाद्, मुमुक्षौ च दशाभेदेन क्रियाभक्तिज्ञानानां समावेशो न विरुध्यत एव, यत्पुनर्नारदीयं वचनं—

"यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावती"ति; तस्यापि न विश्वासपरिमाणप्रभाव इत्यभिप्रायः

"एतावानिति नैतस्य प्रभावः परिमीयते"

इत्युत्तरार्द्धविरोधाद्,

अथ परिमाणान्तरनिराकरणार्थं तद्, एवमप्यर्थकं प्रसज्येत, इतरपदार्थमहिम्नामपि स्वस्वपरिमाणातिरेकेण परिमाणान्तराभावात्, तस्मादयमर्थः—निरङ्कुश एव मन्त्रस्य प्रभावः, तथाऽपि यस्य यावान् विश्वासः स तावत्येव मन्त्रं विनियुङ्क्त इति तस्य तावदेव फलमिति।

अपि च किं कीर्त्तनादौ प्रवृत्तिमात्रहेतुः श्रद्धा; किं वा कीर्त्तनादेः फलसाधनेऽन्तर्भवति ? तत्र यदि तावत्प्रवृत्तिमात्रहेतुस्तदन्तरेणापि श्रद्धां कीर्त्तनादौ प्रवृत्तस्य पापक्षयो भवेदेव तस्यैव निरपेक्षसाधनत्वाद्, अथ फलसाधनेऽन्तर्भवति तर्हि तस्याः शास्त्रेण वा साधनत्वं प्रमीयते प्रमाणान्तरेण वा ? तत्र यदा शास्त्रेण तदा श्रद्धासहकृतं कीर्त्तनं पावनमित्युच्यते, तत्र पृच्छामः सा सहकारिणी श्रद्धा कीर्त्तनमात्रमवलम्ब्यते श्रद्धासहकृतं वेति ? न तावत् कीर्त्तनमात्रं, तस्यासाधनत्वात् साधनविषयत्वाच्च श्रद्धायाः; साधनत्वे वा श्रद्धासहकारव्याघातः, अथ श्रद्धासहकृतं वेति, तत् किमात्मना सहकृतं श्रद्धाऽन्तरेण वा ? न तावदात्मना तस्यैव विषयत्वं विषयित्वं चेति व्याघाताद्, नापि श्रद्धाऽन्तरेण तत्रापि विकल्पापातात्, तदपि किं केवलमवलम्ब्यते स्वसहकृतं श्रद्धाऽन्तरसहकृतं वेति, तत्राद्ययोरुक्तो दोषः, तृतीयेऽपि श्रद्धाऽन्तरं नाम किं प्रथमा श्रद्धा तृतीया वा ? न तावत्प्रथमा; अन्योन्याश्रयापातात्, द्वितीयश्रद्धानिरूपणे हि तत्सहकृतालम्बना प्रथमा निरूप्यते प्रथमश्रद्धानिरूपणे च तत्सहकृतालम्बना द्वितीयेति, अथ तृतीया साऽपि यदि द्वितीयासहकृतमालम्बते; आयातमन्योन्याश्रयत्वं, प्रथमासहकृतश्चेत् चक्रकमापद्यते प्रथमासहकृतं तृतीयाऽऽलम्बते; तृतीयासहकृतं द्वितीया; द्वितीयासहकृतं प्रथमेति, चतुर्थादिसहकृतत्वेऽनवस्थापातः, तस्मान्न शास्त्रेण श्रद्धायाः सहकारित्वावगतिः संभवति ।

ननु कीर्त्तनस्य कारणत्वविषयिणी श्रद्धा; न पुष्कल

कारणत्वविषयिणी, अतः कीर्त्तनमात्रविषयत्वेऽपि तस्या न सहकारित्वव्याघातः, तदुक्तं, श्रद्धा हि; साधनमिदं साध्यं न कदाचिद् व्यभिचरतीति प्रत्ययः स च पुष्कलकारण एवावकल्पते न कारणमात्रे तस्माद्द्वोर एवायं दोषः।

ननु शास्त्रतः कीर्त्तनादेरेव पावनत्वं विश्वासस्य तु प्रमाणान्तरावसेयं सहकारित्वम्, सोऽपि शास्त्रावगतंकीर्त्तनमात्रादेरेव पावनत्वमवलम्ब्यते, तत्र च नोक्तो दोषः। एवं तर्हि यस्मिन्नारोग्यादावन्वयव्यतिरेकौ दृश्येते विश्वासस्य तत्र सहकारित्वमस्तु; पापक्षयः पुनरतीन्द्रियत्वान्न श्रद्धाकिंचित्कारमपेक्षते।

स्मृतिपुराणयोः श्रुतिमूलत्वाविशेषेऽपीतिहासपुराणाभ्यामित्याद्युक्तवाक्यैर्वेदयमाणैश्च वेदार्थादधिकं मन्यइत्याद्यैः पुराणेष्वाज्ञस्यभङ्गो न युक्त इत्याह—एवमिति। समुल्लङ्घिताः सकलाः शृङ्खलाः प्रमोत्पत्तिप्रतिबन्धका दोषा यैस्तेषु वचनेषु सत्सु। क्रियाभक्तिज्ञानानामिति। मुमुक्षुरविरक्तः कर्माणि कुर्यात्, ईषद्विरक्तः श्रीहरिभक्तिम्, अतिविरक्तस्तु ब्रह्मविचारमिति व्यवस्थाप्यते, न तु

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।

मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते—

इति वचनात् श्रद्धावत्त्वमधिकारिविशेषणमिति व्यवस्थेति भावः। नारदीयवचनस्यापि नाधिकारिविशेषणं श्रद्धेत्यर्थ इत्याह—यत् पुनरिति। विश्वासस्य परिमाणमिव परिमाणं यस्य स विश्वासपरिमाणः। प्रभाव इति श्लोकस्थसिद्धिशब्दव्याख्यानम्। शङ्कते—अथेति। तद्वचनम्, तत्किमनर्थकं वचनं? नेत्याह—तस्मादिति। प्रकारान्तरेण श्रद्धाया अधिकारिविशेषणत्वं दूषयति—अपि चेति। तस्याः श्रद्धायाः। कीर्तनमात्रमिति। केवलं कीर्तनमित्यर्थः। साधनत्वादिति। श्रद्धायाः कीर्तनगतफलसाधनत्वान्तर्भावप्रतिज्ञानादिति भावः। केवलकीर्तनस्य फलसाधनत्वे श्रद्धासहकारः प्रतिज्ञातो व्याहन्येत। अथेति। श्रद्धासहकृतं कीर्तनं श्रद्धामवलम्ब्यत इत्यर्थः। सहकृतं

विशिष्टम्। व्याघातादू आत्माश्रयात्। विकल्पापाताद् विकल्पदूषणात्। उक्तो दोष—इति। असाधनत्वादिति व्याघातादिति च क्रमेण पक्षद्वयनिराकरणम्। अन्योन्याश्रयादिति। तृतीयाया अनभिधानाच्छ्रद्धाद्वये परस्पराश्रयत्वमिति भावः। तदाह–द्वितीयेति। द्वितीयं शङ्कते–तयेति। साऽपि द्वितीयासहकृतमालम्बते द्वितीया च तृतीयासहकृतमालम्बत इत्यन्योन्याश्रयत्वम्। प्रथमासहकृतालम्बनत्वे चक्रकम्। चतुर्थ्यादिसहकृतत्वालम्बनत्वेऽनवस्थेति भावः। उत्तरो ग्रन्थः स्पष्टार्थः।

ननु यद्यवगम्यते सहकारित्वमेकत्र श्रद्धायाः तर्हि शक्यत एवानुमानुमन्यत्रापि, तथा हि—पापक्षयः श्रद्धाऽऽदिसहितसाधनवान्; कर्म्मफलत्वाद्, आरोग्यादिवत्, तदयुक्तं कालात्ययापदिष्टत्वाद्धेतोः, अवशेनेत्यादिशास्त्रविरोधात्, सोपाधिकत्वाच्च; मानान्तरयोग्यत्वं हि तत्रोपाधिः, तस्य च साधनाव्यापकत्वे सति साध्यव्यापक उपाधिरित्यस्मिन्नुदयननये युज्यत एवोपाधित्वं, साध्यसमव्याप्तिरिति तु मतान्तरे व्यापकानुपलब्धिलिङ्गकानुमानबाधएवेत्यलमतिप्रसङ्गेन। का तर्हि गतिः "श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येदि"त्यादीनाम्?

उच्यते—न तत्र श्रवणादिविधिवाक्यार्थविषयिणी श्रद्धा श्रवणादेः सहकारित्वेन विधीयते, किन्तर्हि? तत्त्वमस्यादिवाक्यार्थविषयिणी, सा च न प्रतीघः परत्वे वाक्यार्थेऽन्तर्भवति; अपि तु प्रमाणैतिकर्तव्यतात्वेन वहिरेवावतिष्ठते, न च तत्रोक्तदोषप्रसङ्गः, "श्रद्धयाऽग्निः समिध्यत" इत्यादि तु प्रवृत्तिहेतोः श्रद्धायाः स्तावकप्रवृत्तिं विना पुरुषार्थस्यैवासिद्धेः।

ननु यदि प्रवृत्तिहेतुः श्रद्धा, आयातमधिकारिविशेषणत्वं श्रद्धायाः? मैवम्, अशाब्दत्वात्। नन्वशाब्दमपि

सामर्थ्यवद् विद्वत्तावच्चाधिकारिविशेषणं भवत्येव शब्दापेक्षितत्वात्, श्रद्धा च शब्दापेक्षिता भवति, असमर्थस्याविदुषोऽश्रद्धधानस्यानुष्ठानायोगाद्, अतोऽधिकारिविशेषणमेव श्रद्धेति, असार्वत्रिकमेतद्, यद्धि बहुलाङ्गं बहुधनसाध्यं वा बहुकालव्यापि वा स्वरूपेण वा दुष्करं कर्म्म तत्र न कश्चिदपि श्रद्धां विना प्रवर्त्तत इति भवत्यधिकारहेतुः श्रद्धा, यत्र पुनः सुकरे कीर्त्तनादौ प्रकारान्तरेणापि प्रवृत्तिः संभवति तत्रानुपपत्तेरभावाद् अश्रुतत्वाच्च नियमपरिकल्पनाऽयोगान्नैवाधिकारहेतुः श्रद्धेति। भक्तेरप्यधिकारिविशेषणत्वं न संभवति, सा हि श्रवणादिनवविधभजनलक्षणा भावलक्षणा वा? न तावद् भजनलक्षणा तस्यामेवाधिकारहेतोर्जिज्ञासितत्वाद्, नापि भावलक्षणा; सा हि फलं निमित्तं वा? तत्र यदि फलं काम्यमानतयैव तस्या अधिकारिविशेषणत्वं न स्वरूपेण, तथा च सति भक्तिकामस्याधिकारः स्यान्न भक्तस्य, न चास्याप्यधिकारः, ब्रह्महादेर्हननादिजनितदोषनिरासार्थिनोऽधिकृतत्वाद्, न च भक्तिकामाधिकारे दोषनिरासोऽप्यन्तर्भवति, अक्षीणदोषस्य भक्तेरनुदयाद्—

नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत—

इतिवचनादिति वक्तव्यं, तस्य द्वारमात्रत्वेनानुद्देश्यत्वात्।

ननु तर्हि निमित्तं भक्तिः श्रवणादिविधेः; तत्र च तस्याः पापक्षयकामनायाश्च संवलितयोरधिकारहेतुता जातेष्टाविव पुत्रजन्मनः तत्पूतत्वादिकामनायाश्च, इदमप्यसाधीयः, भक्तेरेव श्रवणाद्यनुष्ठानात्प्रागसिद्धेः, यथोक्तं श्रीभागवते—

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्त्तनः ।
हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥
नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥

अत एवेदमपि प्रत्युक्तं; यद् भावोदयादुपरितनानां पापानां भगवद्भजनं प्रायश्चित्तं, प्राचीनानां तु स्मार्तमिति, श्रवणादिधौतपापस्यैव भावोदयप्रतिपादनाद्, नष्टप्रायेति च नष्टानामप्यभद्राणां सत्सु कामादिषु पुनः पुनरुद्भवात् तन्निवृत्तेश्च भावैकसाध्यत्वात्

तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदतीति वचनात् ।

ननु तर्हि नैष्ठिकी भक्तिरास्तां तस्याः श्रवणाद्यभ्यासपटिमसाध्यत्वात् प्रीतिमात्रं पुनः प्रागपि जन्मान्तरसंस्कारवशात्संभवतीति तस्यैवाधिकारहेतुतेति, तदसत्, प्रमाणाभावात्

सर्वात्मना विदधते खलु भावयोगं—
त्यक्तान्यभावस्य हरिः परेश—

इत्यादि तत्र प्रमाणं तच्च नैष्ठिकीमेवावलम्बते,

अनुमानावष्टम्भेन शङ्कते–ननु यदीति । पथ्यारोग्यादौ । अन्यत्रापि पापक्षयेऽपि,। अवशेनापि यन्नाम्नीत्यादिश्रुतिबाधितमनुमानमित्याह–कालेति । व्यापकं मानान्तरयोग्यत्वं तस्यानुपलब्धिरभावस्तल्लिङ्गकानुमानबाधः । पापक्षयो न श्रद्धासाधनवान्; तथाऽर्थे मानान्तरायोग्यत्वादिति । प्रतीचः परत्वे = परब्रह्माभेदे । भक्तेरधिकारिविशेषणत्वे दूषणभेदमाह—भक्तेरिति । भावलक्षणा = भगवति निरतिशयप्रीतिलक्षणा । न च तस्येति । भक्तिकामस्येत्यर्थः । ब्रह्महादेर्निरासार्थिन— इति सामानाधिकरण्यम् । अधिकृतत्वादिति । रात्रिसत्रे प्रतिष्ठाया इव नामकीर्त्तने दोषक्षयस्यार्थवादावगतत्वादिति भावः । न वक्तव्यमिति

संबन्धः । अन्तर्भवन्तीति । कामनाविशेषणत्वेनेति भावः । तत्र हेतुः—अक्षीणेति । तत्र प्रमाणमाह—नराणामिति । न वक्तव्यमिति प्रतिज्ञायां—हेतुमाह—तस्येति । दोषक्षयस्येत्यर्थः । जातेष्टिवत्संवलिताधिकारतां—शङ्कते—ननु तर्हीति । पुत्रे जात इति सप्तमीवद्भक्तेर्निमित्तत्वश्रापकाभावान्न संवलिताधिकारतेत्याह—इदमपीति । दूषणान्तरमाह—भक्तेरिति । प्रकारान्तरेण पौराणस्मार्त्तयोर्व्यवस्थामाशङ्क्य परिहरति—अतएवेति । भावो भक्तिः श्रवणादीनि, तत उदिते भावे श्रवणादिरूपे भगवद्भजने प्रवृत्तिस्ततश्च भावोदय इति परस्पराश्रयत्वमिति भावः । उत्तरौ चोद्यपरिहारौ स्पष्टौ ।

यत्तु यन्नामकीर्त्तनं भक्त्येति; तस्यापि न कीर्त्तनाङ्गं—भक्तिरित्यर्थः, गुणफलाधिकारो हि सः, स्वत एव पापक्षयसाधनं कीर्त्तनकर्म्माश्रित्य फलगतातिशयमुद्दिश्य भक्तेर्विधानादनुत्तमं विलापनमिति; यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीतिवत्, फलगतातिशयश्चात्र पापकारणानां रागादीनां निवृत्तिः रागादिनिवृत्तेर्भक्तिसाध्यत्वस्याभिधानात् "के चित्केवलया भक्त्या" इत्यत्रापि भजनक्रियैव भक्तिः; न भावः, तस्या एवाप्रकरणसमासः प्रपञ्चनाद्, "वासुदेवपरायणा" इत्यत्रापि न भावः कैवल्यविरोधात् ।

ननु यन्नामकीर्तनं भक्त्येतिवाक्याद्भक्तेरङ्गत्वं प्रतीयते ततश्चार्थादधिकारिविशेषणता भविष्यतीत्यत आह—यत्त्विति । कोऽसौ फलगतोऽतिशयस्तत्राह—फलगतेति । केनाभिधानं तत्राह—के चिदिति । किमत्र भक्तिशब्दवाच्यं तत्राह—अत्रापीति । अपिशब्दाद्यन्नामकीर्तनं भक्त्येति वाक्यसमुच्चयः । न भाव इति । ततश्च भावोदयादुपरितनानां पापानां—भगवद्भजनं प्रायश्चित्तं नाशङ्कनीयमिति । ननु वासुदेवपरायणा इत्यनेना—स्मिन्नेव वाक्ये भावः प्रतीयते पापक्षयसाधनत्वेन तत्राह—वासुदेवेति । कैवल्येति । के चित्केवलया भक्त्येति कैवल्यविरोधादित्यर्थः ।

ननु समानवाक्योपात्तस्य भावस्य व्यवच्छेदायोगात् तदतिरिक्तसाधनव्यवच्छेद एव कैवल्यं? नैवं, श्रुतिविरो-

धिनो वाक्यस्य दुर्बलत्वात् श्रुतिरिह केवलया भक्त्येति तृतीया, वासुदेवपरायणा धुन्वन्त्यघमिति तु वाक्यम्, अतो गर्भितोऽयं हेतुः यस्माद्वासुदेवपरापणास्तस्मात्सकलमघं धुन्वन्तीति सर्व्वानुस्यूतः सर्वाधारश्च देवः परमयनमाश्रयो येषां तेषां सर्वेश्वरसनाथानामुचितमेव सर्व्वाघविजयित्वमिति भावः । अपि च स्वरूपेण तदाश्रयत्वे मुख्योऽयं शब्दः, भावस्य तु तदालम्बनत्वे गौणः, तस्मान्न भावस्य कीर्त्तनाङ्गत्वे प्रमाणमिदम् ।

सकृन्मनः कृष्णपदारविन्दयो—
निवेशितं तद्गुणरागि यैरिह—

त्यत्रापि विषयसौन्दर्यादेव प्राप्तस्य रागस्मरणस्य सुकरत्वप्रतिपादनार्थमनुवादः ।

एवं विमृश्य सुधियो भगवत्यनन्ते
सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां—
स्यात्पातकं तदपि हन्त्युरुगायवादः ।

इत्यत्रापि पातकाभावादेव दण्डानर्हत्वं; तदभावश्च तत्कारणाभावाद्, अत एवोक्तमथ यद्यमीषां स्यात्पातकमिति । रागाद्यभावेऽपि यदि कथञ्चित्प्रमादात्पातकं—स्यादित्यर्थः; तदपि हन्त्युरुगायवाद इत्यपि न भावसहकृतं कीर्तनम्, अपिशब्दाद् न केवलं भावोदयात्प्राचीनमेव; अपि तूपरितनमपि पातकं हन्त्युरुगायस्य बह्वभिधानस्यानन्तानन्दसुधासिन्धोर्बहुभिर्गीयमानस्य वा सकलजगत्प्रशस्यपुण्यकीर्त्तेर्वादः कीर्त्तनं, भावस्तु विद्यमानोऽप्युदास्ते, अतितुच्छत्वात्पापनिवृत्तेरिति हि तस्यार्थः'।

ये देवसिद्धपरिगीतपवित्रगाथा—
ये साधवः समदृशो भगवत्प्रपन्नाः।
तान्नोपसीदत हरेर्गदयाऽभिगुप्ता-
न्नैषां वयं त्वधिकृताः प्रभवाम दण्ड—

इत्यस्याप्ययमेवार्थः, कथं ? ये समदृशः सर्वात्मभावेन भगवन्तं पश्यन्ति, अत एव साधवो रागादिदोषरहितास्तान्नोपसीदत तेषां समीपमपि मा यात, न ह्येषां वयं स्वामिनः पापिनां हि निग्रहे वयमधिकृताः, न तेषां पापगन्धोऽपि; अथ कथञ्चित्स्यात् पातकं तथाऽपि वयं दण्डे न प्रभवामः भगवत्प्रपन्ना हि ते भगवत्प्रपदनेन कीर्त्तनादीनामन्यतमेन दास्यलक्षणेन वा भजनेनैव निरस्तपापाः, अत एव सकलजगत्प्रसिद्धां पापोत्पत्तिं प्रतिपद्यमानाः श्रुतिपुराणसिद्धान्तरहस्यगहनगर्भितां तु तन्निःसरणसरणिमविदुषां भवादृशां भ्रान्त्याऽपि कथंचिदुपगमनं स्यादिति हरेर्गदया सर्वतो गुप्तास्तान्नोपसीदतेति, अपि च देवानां मध्ये ये सिद्धा माहात्म्यविशेषसंपन्नाः पुरन्दरादयः तैः स्वतःपूतैरप्यतिशयेन पूतत्वाय परिगीता पवित्रभूता गाथा येषां लक्षणापेतमपि यन्नामाङ्कितं पद्यं वा प्राकृतभाषारचितं वा तेषां पूतत्वे कतमः सन्देह इति। "स्वपादमूलं भजत" इत्यत्र तु विविदिषावाक्यविनियुक्तात्कर्मणोऽन्यत्सर्वमेव मुक्तिविरुद्धं कर्म विकर्मशब्देनोच्यते न निषिद्धकर्ममात्रं तस्य कीर्त्तनादिमात्रान्निवृत्तेर्दर्शितत्वात्,

श्रीपराशरसंहितायामपि न चलतीत्यादिभिरुपलक्षितानां सततं मनसि जनार्दनं दधानानां पापहेतूनां—

रागादीनामुच्छेदो विवक्षितः पापच्चयः पुनः कीर्त्तनमात्रात्

कमलनयन वासुदेव विष्णो
धरणिधराच्युत शङ्खचक्रपाणे !
भव शरणमितीरयन्ति ये वै
त्यज भट ! दूरतरेण तानपापानिति

वचनाद्; भक्तानां नरकपातस्यानाशङ्कनीयत्वादेव न तदर्थमयमारम्भः, अपि तु तत्रत्यासन्नजनवर्जनार्थं,—यदाह—"व्रज तान् विहाय दूरात्" "त्यज भट दूरतरेण तानपापान्" "व्रज भट दूरतरेण मानवानामि" ति च, अतएवोपक्रमेऽपि "परिहर मधुसूदनप्रपन्नान्" दूरत इति व्याख्येयं, न च स्तुतिमात्रत्वमेपाम्, उपपत्तिमत्त्वात्, तथा हि—

सकलमिदमहञ्च वासुदेवः
परमपुमान्परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते
हृदयगते व्रज तान् विहाय दूरादित्यस्या—

नन्ते श्रवणादिभिरावर्जिते हृदयगते सति तत्प्रसादादेवाहमिदमिति भोक्तृभोग्यरूपं सकलं जगद्वासुदेवो-माययाच्छन्नचित्प्रकाश एव न तस्मादतिरिच्यते, स हि परमपुमान् पुरुषस्य निरुपाधिकं स्वरूपं परमेश्वरश्च सर्व्वाधिष्ठानं स एकः स्वरूपेण, एवं सजातीयविजातीयस्वगतभेदविरहान्नितान्तनिर्भेदं भगवत्तत्त्वमिति मतिरचला भवति येषां तान् दूराद्विहाय व्रज भट; तदवलोकनपरिपवित्रिता हि प्राणिनो नैवास्मद्गोचरे वर्त्तन्त-

इत्यर्थः। एतदेव स्पष्टीकृतं; पुरुषवरस्य चैतस्य दृष्टिपाते न तव गतिरथ वा ममास्तीति, महद्दर्शनस्य च पावनत्वं प्रसिद्धमेव—

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधव—
इत्यादौ ।

शङ्कते—नन्विति । समानवाक्योपात्तस्येति । केचित्केवलया भक्त्या वासुदेवपरायणा इत्यत्र कैवल्यं वासुदेवपरायणशब्दोक्तभावव्यावर्त्तकत्वं न सहते तद्विरोधादित्यर्थः । तदतिरिक्तं साधनं स्मार्तं प्रायश्चित्तम् । अतो वासुदेवे भावुकानां केवलं भगवद्भजनं पापक्षयसाधनमिति वाक्यार्थः । केवलयेति श्रुत्या कीर्त्तनादिरूपाया भक्तेरविशेषतोऽन्यनिरपेक्षत्वं प्रतीयते, वासुदेवपरायणा इति वाक्येन भावुकानामिति संकोचः क्रियते, न च श्रुतिविरोधे वाक्यं प्रवर्त्तत इति समाधत्ते—नैवमिति । तर्हि वासुदेवपरायणा इत्यनर्थकं ? नेत्याह—अत इति । वासुदेवपदार्थमाह—सर्वेति । परायणशब्दार्थमाह—परमिति । तात्पर्यार्थमाह—सर्वेश्वरेति। भाव इति । वासुदेवपरायणा इत्यस्य तात्पर्यं वासुदेवपरायणशब्दशक्यो न । दूषणान्तरमाह—अपि चेति । ननु सकृन्मन इत्यादिवाक्ये गुणरागिशब्देन भावः पापक्षयसाधनत्वेन प्रतीयते तत्राह-सकृदिति । विषयः परमात्मा । तत्सौन्दर्यादिप्रातरागस्य पुरुषस्य स्मरणसौकर्यप्रतिपादनार्थमित्यर्थः । नन्वेवं विक्रुश्येत्यादिवाक्ये स्पष्टं भावयुक्तानां पुंसां पापक्षयसाधनं कीर्त्तनं प्रतीयते तत्राह—एवमिति । उरुगायशब्दार्थमाह—बह्वभिधानस्येति । अनन्तानन्देति तात्पर्यार्थः । पापाग्निःसरणमार्गमविदुषां भवादृशां दूतानाम् । गाथाशब्दार्थमाह-लक्षणेति ।

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथं चिद्धुनोति सर्वं हृदि सन्निविष्टः—

इति श्लोके भावुकस्य पुंसो विकर्मपदवाच्यनिषिद्धनिवृत्तिप्रतिपादनाद्य कीर्त्तनमात्रात्पापनिवृत्तिरतआह—स्वपादेति । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति विविदिषावाक्यम् । मुक्तिविरुद्धं काम्यमित्यर्थः। दधानानां पुंसाम् । ननु भक्ता-

नामुपक्रमात्कथं तेषां नरकपातशङ्का ? अत आह–भक्तानामिति। दूरतरेणेति तरप्शब्दप्रयोगाद्विष्णुभक्तप्रत्यासन्नजनवर्जनार्थमयमारम्भ इति भावः।

दर्शनं चात्र तत्कर्तृकं तत्कर्म्मकं वा, उभयस्यापि पावनत्वाविशेषाद्, "व्रज भट दूरतरेण तानपापानि"-त्यपि न स्तुतिपरं, कमलनयनकीर्त्तनध्वनिर्हि सर्व्वतो विसारी कुड्यादिव्यवधानेऽपि वेधकश्च, अतस्तदन्तराले वर्त्तमानानामन्धवधिराणामपि सर्व्वेषामनङ्गुलिप्रेक्षणीयत्वात् तान् दूरतरेण व्रजेत्युपपन्न एव तदर्थः, अपापानिति च न स्वगतपापाभावो विवक्षितः, किन्तु परगतपापनिषेधकत्वं प्रयोजनवशाद्

यमनियमविधूतकल्मषाणा—
मनुदिनमच्युतसक्तमानसानाम्।
अपगतमदमानमत्सराणां—
व्रज भट! दूरतरेण मानवाना—

मित्यत्रापि नियमे स्वाध्यायस्यान्तर्भावात् तस्य च परदेवताप्रकाशकमन्त्रोच्चारणात्मकत्वाद् भक्त्यावेशवशादुच्चैरुच्चारणस्यापि संभवाद् विवक्षितएव तदर्थः। उत्तमभागवतास्तु दुर्लभदर्शनास्तेषां हि बहिर्विरलः प्रचारः प्रचरन्तोऽप्यनुपासितशरीरतया न सर्वैरुपलभ्यन्ते तेषामपि युगमात्रावलोकिनां कथं चित्कश्चिल्लोचनगोचरमवतरतीति दूरादित्युक्तम्,

यस्य देवे च मन्त्रे च गुरौ च त्रिषु निश्चला।
न व्यवच्छिद्यते भक्तिस्तस्य सिद्धिर्न दूरत—

इत्यादौ तु सिद्धिरपवर्गादिलक्षणा; न पापक्षयलक्षणा, वचनान्तरानुरोधात्, तस्मात्केवलं कीर्त्तनादि पापक्षय-

हेतुः, न तत्र भक्तिरङ्गम् अधिकारिविशेषणं वा, अभिधेयज्ञानमपि नाङ्गं प्रमाणाभावादेव।

प्रसङ्गान्महद्दर्शनमाहात्म्यं निरूपयति—दर्शनं चेति। ननु व्रज भट दूरतरेण तानपापानित्यर्थवाद एव किं न स्यादत आह—व्रज भटेति। तदन्तराल इति। यावति देशे नामकीर्त्तनध्वनिस्तदन्तराल इति। अनङ्गुलिप्रेक्षणीयत्यादिति। येष्वङ्गुलिरपि दर्शयितुं न शक्यते तावतैवेश्वरनिगृहीतत्वात्तेषामानयनं दूरापास्तमिति भावः। परगतेति। स्वसन्निहितगतपापनिवर्त्तकमित्यर्थः। नियम इति।

तपःस्वाध्यायसंतोषाः शौचं च हरिपूजनम्।
संध्योपासनमुख्याश्च नियमाः परिकीर्त्तिताः॥

इत्यत्रोक्ता इत्यर्थः। कथं तर्हि सकलमिदमहं च वासुदेव इत्यादि—श्लोके न तरप्संकीर्तनं? तत्राह—उत्तमभागवतास्त्विति। परमप्रकृतमुपसंहरति—तस्मादिति। नन्वभिधेयपरमेश्वरज्ञानं कीर्त्तनाङ्गं स्यान्नेत्याह—अभिधेयेति।

ननु दर्शितं प्रमाणं; सत्यं दर्शितं न तु तदङ्गत्वे प्रमाणं, "यद्व्याजहारविवशो," "हरिरित्यवशेनाह" "सांकेत्यं पारिहास्यं वा" "हरिरवशाभिहितोऽप्यघौघनाशः" "अवशेनापि यन्नाम्नि कीर्त्तिते" "हरिरिति सकदुच्चरितं दस्युछलेनापि यैर्मनुजैः" इत्यादिबहुतरप्रमाणविरोधाद्, न चैतेषामतत्परत्वम्, अभ्यासगतिसामान्याभ्यामित्यवादिष्म। नन्वपिशद्वयोगादेषामतत्परत्वमेवं, भागासिद्धत्वाद्धेतोः, "यद् व्याजहार विवशोइत्यादावदर्शनाद्।

ननु तत्राप्यध्याहार्य्योऽपिशद्वः; तदर्थस्य विवक्षितत्वाद्, अन्यथा ज्ञानपूर्वककीर्त्तनस्यापावनत्वप्रसङ्गात्? तदयुक्तं, न हि श्रुतबाधायाध्याहरन्ति, अपि तु श्रुतोपपत्तये, एवं च सिद्धमेवावशात् कीर्त्तनस्य पावनत्वम्। अपि च; अपिशद्वयोगे तदपि स्याद्, न तु तदेवेत्येतावद्, न पुनस्तत्र भवत्येव।

नन्वपिशद्वयोगे तात्पर्यमन्यत्र स्याद्; अतात्पर्यविषये बाधकाभावसव्यपेक्षमेव प्रामाण्यम्, एषां च बाधकस्य विद्यमानत्वान्न प्रामाण्यमिति? इदमसाधु। ज्ञानाख्यगुणविधायकं हि तस्य बाधकं; न च यतस्तद्विषया मतिरित्यादेर्विधायकत्वम्, उपपत्त्यर्थवादो ह्यसौ सर्वामर्थनिर्वहणीं ब्रह्मविद्यामुत्पादयतः पापनिर्हरणे कियान् प्रयास इति, "नाम स्वस्त्ययनं हरे" रिति स्वस्तिशब्देन मोक्षोऽभिधीयते, स्वस्त्यविनाशिनामेति नैरुक्ताः, मोक्षसाधनत्वं च न विधीयते पदार्थशक्तेरविधेयत्वात्, किन्तु सिद्धमेव सङ्कीर्त्यते अतत्साध्यत्वोपपत्त्यर्थं, तद्वदत्रापि।

दर्शितं कीर्त्तनकर्तव्यताबोधकं प्रमाणं; तत्र प्रमाणमिति शङ्कते-नन्विति। अभिधेयज्ञानस्याङ्गत्वे न प्रमाणमिति परिहरति-सत्यमिति। तत्र तत्र विवशत्वसंकोर्त्तनादिति भावः। अतत्परत्वं=विवशत्वपरत्वभावः। प्रतिज्ञातार्थे हेतुमाह-अभ्यासेति। अभ्यास एकत्र पुराण आवृत्तिः। गतिसामान्यमनेकपुराणप्रतिपन्नत्वम्। अपिशब्दादिति। अवशेनापि दस्युच्छलेनापीति। एषां वाक्यानां भागासिद्धिमेवाह—यदिति। तदर्थस्य = अपिशब्दार्थस्य। विवशेनापि संकोर्त्तनं पावनंकिमुत ज्ञानपूर्वकमित्यस्येत्यर्थः। अत्र हि विवशत्वेन नामकोर्त्तनस्य पावनत्वं श्रुत;तस्य न बाधोऽपिशब्देनेत्युपसंहरति—एवं चेति। तदपि स्यादित्यर्थः। न तु तदेवेति। एकमेवेत्यर्थः। एतावदित्यपिशब्दाद्विवक्षितमिति, ततश्च विवशत्वेन ज्ञानपूर्वकं च नामकीर्त्तनं पावनमिति भावः। न पुनस्तदिति। तच्छ्रूयमाणं न भवत्येवेत्यपि विवक्षितं नेति भावः। शङ्कते—नन्विति। अन्यत्रेति। विवशत्वादिति शेषः। तदेवोपपादयति—अतात्पर्येति। बाधकाभावेन दूषयति—ज्ञानेति। उपपत्त्यर्थवादत्वमेवाह—सर्वेति। नामकीर्तनस्येति शेषः। ननु सर्वानर्थनिर्वहणब्रह्मविद्योत्पादकत्वे किं मानं? तत्राह—नामेति। किमत्र मोक्षसाधनत्वे विधिनेत्याह-मोक्षेति। श्रुतं पापक्षयसाधनत्वं तदुपपत्तय इत्यर्थः। अत्रापि = यतस्तद्विषयामतिरित्यत्रापि, न विधिरित्यर्थः।

नन्वर्थवादाद्विधिः श्रेयान्, तत्र श्रेयान् यत्र गुणवादः प्रसज्येत, इह पुनरर्थवादत्वेऽपि यथाऽर्थवाद एवेति नायं न्यायः, अपि च बहुतराणां स्वरसत एव प्रतीयमानं प्रमाणान्तरैरविरुद्धमनधिगतमुपयुक्तमर्थमनुवाद्य; द्वित्राणां वा विधित्वं कल्प्यतां; सर्वेषां च स्वं स्वमर्थमजहतामर्थवादत्वमिति मीमांसायामपङ्क्तिभेद एव श्रेयान्, अपि च कैमुत्यविवक्षायां दृष्टान्ता नोपपद्यन्ते—

अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत्।
संकीर्त्तितमघं पुंसां दहत्येधो यथाऽनलः॥
यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया।
अजानतोऽप्यात्मगुणान् कुर्यान्मन्त्रोऽप्युदाहृतः॥
हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावक—

इत्यादयः, साध्यवैकल्याद्, न हि तेषु कैमुत्यमस्ति; अपि तु ज्ञानाज्ञानयोः साधारण एव साधनभावः, अपि च "नारायणेत्येतज्जगाद चतुरक्षरं" "हरिरित्यक्षरद्वयमि"ति वदन् शब्द एव विवक्षितो नार्थानुसंधानमित्यभिसंधत्ते, अन्यच्च "यतस्तद्विषया मतिरि" त्यादौ न विधिः कल्पयितुं शक्यते, साधिकारं हीदं वाक्यं, न च साधिकारे वाक्ये गुणविधिमनुमन्यन्ते न्यायविदः, वैरूप्यं हि तदा प्रसज्येत, प्रवृत्तिरपि स्वविषयज्ञानापेक्षिणी न पुनर्निमित्तज्ञानापेक्षिणी, तस्मान्न ज्ञानमङ्गं कीर्त्तनस्य, नाप्यधिकारहेतुः। यदप्युक्तम्—अनुतप्तानुतप्तभेदेन सकृत् कृतमावर्त्तितं च कीर्त्तनं व्यवस्थितमिति; तदपि नातीवाभिप्रेतं, तथा हि–विधाद्वयमप्येतत् किं विधिसामर्थ्या-

न्निवर्त्तकं पातकस्य; किं वा स्वसामर्थ्यात्? तत्र यदि विधिसामर्थ्यात् तर्हि भवितव्यमुभयत्राप्यनुतापेन, अनुतप्ता एव हि प्रायश्चित्तविधावधिक्रियन्ते, यदि स्वसामर्थ्यात् तर्हि न कुत्रचिदनुतापोपयोगः, न खलु पदार्थस्वभावः पुरुषगतां योग्यतामपेक्षते, न हि तपनस्तपस्विनयनाङ्गनगतामेव तमस्तमालवल्लीमुन्मूलयति न तु चाण्डालचक्षुश्चत्वरवर्त्तमानामित्यस्तिनियमः, अपि चेदं स्वमहिम्नैव पावनत्वमुचितं न तु विधिसामर्थ्याद्, विधेर्हि विधाद्वयं लिङादियुक्तं वाक्यं; लिङाद्यर्थश्च, तत्र प्रथमोविधिः प्रमाणमेव, प्रमाणं च प्रमेये न कथं चिदविद्यमानं महिमानमुत्पादयति, अपि तु यथाऽवस्थितमेव वस्तुतत्त्वमनवगतमवगमयत्येव, उक्तं हि मीमांसाभाष्यकृद्भिः "उपायं तु न वेद तस्योपायः कथनीय" इति, नैष्कर्म्यसिद्धिकारैरपि

"उपायान् प्रासिहानार्थान् शास्त्रं भासयतेऽर्कवदि"ति, द्वितीयः पुनः फलसाधनत्वमेव न तस्य पुनः साधनाधीनसाधनत्वं, तस्मात्स्वमिहम्नैव पावनत्वं स्वमहिम्नैव चेदमंहसां निवर्त्तकं कीर्त्तनमावृत्तोरुच्चाटनमन्त्रो जपएव श्रद्धाऽऽदीनामपि, न हि मिहिरस्तिमिरं विहन्तुमुदयमावर्त्तयति श्रद्धाऽऽदिकं वाऽपेक्षते, न च मन्तव्यमावृत्तस्यैव तादृशः प्रभावः न तु सकृत्कृतस्येति? सकृत्कृतस्यापि पावनत्वप्रतिपादकानां वचनानामनेकेषां दर्शितत्वाद्। न च तेषामवयवानुवादानां द्वादशकपालप्रशंसाऽर्थतावदावृत्तिगुणयुक्तकीर्त्तनप्रशंसाऽर्थतेति वाच्यं, स्वार्थे प्रामाण्यस्य प्रबन्धेन प्रतिपादितत्वात्, तस्माद् व्यवस्थैव परं परिशिष्यते, सा च न संभवतीत्यभिहितमेव।

द्विप्राणामिति। यतस्तद्विषया मतिरित्यादीनामित्यर्थः। मीमांसायां

संदेहे। अपङ्क्तिभेद–इति। अवैषम्यमित्यर्थः। कैमुत्येति। अज्ञानादपि नामकीर्त्तने पापक्षयो भवति किमुत ज्ञानपूर्वक इति विवक्षायामित्यर्थः। अगदमोपधम्। साध्यवैकल्यमेवाह—न हीति। साधिकारमिति।

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिरिति—

वाक्ये नामोच्चारणस्य पापक्षयफलसंबन्धात्मकोऽधिकारः प्रतिपाद्यत इत्यर्थः। तावता किं? तत्राह—न चेति। वैरूप्यमिति। पापक्षयोद्देशेन नामोच्चारणं विधीयते, तदुद्देशेन चाभिधेयज्ञानात्मकगुणविधानमित्येकस्य नामोच्चारणस्योपादेयत्वोद्देश्यत्वविधेयत्वानुवाद्यत्वगुणत्वप्रधानत्वमिति विरुद्धत्रिकद्वयापत्तिरित्यर्थः। अभिधेयज्ञानाभावे कथं नामोच्चारणे प्रवृत्तिः? तत्राह प्रवृत्तिरपीति। स्वविषयो नामोच्चारणम्। नामी= परमात्मा। नाप्यधिकारेति। अभिधेयज्ञानवानधिकारीत्यपि नेत्यर्थः। मानाभावादेवेति भावः। विधाद्वयमिति। अनुतप्तानुतप्तकृतं नामकीर्त्तनमित्यर्थः। इह = नामोच्चारणे। प्राप्तिरिष्टस्य हानमनिष्टस्य तदर्थामित्यर्थः। द्वितीयो = लिङ्गाद्यर्थः। पावनत्वं पापक्षयसाधनत्वं, ततश्चात्माश्रयनेत्यर्थः। स्वमहिम्नेति। नामकीर्त्तनमहिम्नेत्यर्थः। फलितमाह—स्वमहिम्नैवेति। अंहसां पापानाम्। उच्चाटनमभावः। अतएव श्रद्धाऽऽदीनामप्युच्चाटनमित्यनुषङ्गः। मिहिरः सूर्यः। अन्वयवानुवादानामिति। "यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाती"त्यादीनां "वैश्वानरं द्वादशकपालं निर्वपेदि"त्येतद्विधिविहितयागार्थवादत्वं यथा; तथेत्यर्थः। प्रबन्धेन = विस्तरेण। अनुतप्तस्य सकृन्नामोच्चारणमितरस्यासकृदिति व्यवस्था।

ननु तर्हि कथमनुतापमावृत्तिं चाभिदधद्वाक्यजातं व्याख्येयम्? व्याख्यायते—कृते पापेऽनुताप इत्यस्य तावत्पापक्षयसाधनं कीर्त्तनमित्येतावानेवार्थः, तथा हि—प्रायश्चित्तशब्दस्तावत्कीर्त्तने न मुख्यः,

"प्रायो नाम तपः प्रोक्तं चित्तं निश्चयउच्यते" इति व्याख्यानाद्, न च कीर्त्तनं तयोरन्यतरदुभयं वा, अतो-गौणोऽयं, यथा प्रायश्चित्तं हितसाधनं; तथेदमपि, हितं-

च द्विविधं सुखप्राप्तिरनर्थपरिहारश्च, तत्राप्यनर्थपरिहारलक्षणं हितं विध्यपेक्षितत्वं समर्पयति,

"कृते पापेऽनुतापो वै यस्य पुंसः प्रजायत इति

यो हि यस्मादनुतप्तस्तस्य तन्निवृत्तिरेव हितं ततश्च पापादनुतप्तस्य कीर्त्तनं हितसाधनमित्युक्ते पापक्षयसाधनमित्युक्तं भवति, परशब्दश्च केवलशब्दपर्य्यायः, कीर्त्तनमेव पुष्कलं साधनमित्यर्थः। एकमिति सकृदितिच हरिकीर्त्तनस्य सर्वस्यैव स्मारकत्वात् संस्मरणमित्यनुवादः, स च प्ररोचनफलः; समीचीनं ह्येतदिति, स्वर्गकामादिपदमपि समीहितलक्षणस्य विधेः प्रथमापेक्षितसमीहितविशेषणसमर्पणपरमेव न पुरुषपरम्, अर्थतस्तु स्वर्गकामोऽधिकारीति मीमांसाहृदयवेदिनांनिर्णयः।

नन्विहापि तर्ह्यनुतप्तस्याधिकारः प्राप्त एव? मैवम्, अत्यन्तसुकरत्वेनान्यथाऽपि प्रवृत्तिसंभवाद्, अशाब्दत्वादेव च फलकामनायाः प्रकारान्तरेणापि प्रवृत्तस्य पापक्षयो भवेदेव।

नन्वेवं तर्ह्यस्वर्गकामस्यापि यागादौ प्रवृत्तस्य स्वर्गः किं न स्यात्? को वा ब्रूते प्रवृत्तस्य न स्यादिति? किन्तु प्रवृत्तिरेव तस्मिन्फलकामनामन्तरेण न संभाव्यते; दुर्भरगरिमत्वात्, कौतूहलादिकमपि न सकलाङ्गकलापव्यापिनीं प्रवृत्तिमुत्पादयितुमलम्, अतस्तत्कामस्यैव तत्राधिकारः, इह पुनः फलाभिसंधिमन्तरेणापि स्वभावसुभगतया सुकरतया च सुलभा प्रवृत्तिरिति सर्वस्यैवाविकलवागिन्द्रियस्याधिकारः, अत एव सुकरेषु कर्मसु फलकामनां विनाऽपि प्रवृत्तिः संभवति, प्रवृत्तस्य च

फलसिद्धेरनिवार्यत्वात्, तस्माश्च संसारहेतुभावाद् मुमुक्षोः काम्यकर्मत्यागं समादिशद्भगवान्—
"काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरि"ति,

तस्मादनुतापो नाधिकारे हेतुः; नाप्यङ्गं कीर्त्तनस्य; अवशेनेत्यादिप्रमाणविरोधात्, कृष्णानुस्मरणं परमित्यत्रापि परमुत्कृष्टं प्रायश्चित्तमत्यन्तशुद्धिसाधनमावृत्तिगुणकं कृष्णकीर्त्तनमिति विवक्षितम्, अत्यन्तशुद्धिश्च सह वासनाभिः पापानां परिक्षय इति प्रपञ्चितमेव, ततश्च भविष्यद्भिः पापैरनुपश्लेषः फलमावृत्तेः, कीर्त्तनमात्रस्य पुनः प्राचीनपापक्षय इत्युक्तं भवति, अत एवोक्तमुत्तरश्लोकेन "कृते पापेऽनुतापो वै यस्ये"ति, अन्यथा हि सामान्येन पापादनुतापो यस्येत्यवदिष्यद्। एवं सर्व्वत्रावृत्तानावृत्तकीर्त्तनविषयाणि वचनानि व्याख्येयानि। अत्रावृत्तिविषयाणि तावद्—

नैकान्तिकं तद्धि कृतेऽपि निष्कृते
मनः पुनर्द्धावति चेदसत्पथे।
तत्कर्मनिर्हारमभीप्सतो हरे-
र्गुणानुवादः खलु सत्त्वभावन-

इत्यत्रावृत्तस्य भगवत्कीर्त्तनस्यात्यन्तशुद्धिहेतुत्वं स्पष्टमेव।

नातः परं कर्मनिबन्धकृन्तनं—
मुमुक्षतां तीर्थपदानुकीर्त्तनादि—

त्यत्रापि मुमुक्षूणामधिकृतत्वादत्यन्तशुद्धिरेव विवक्षिता।

किंकरा दण्डपाशौ वा नियमो न च यातनाः

समर्थास्तस्य यस्यात्मा केवलालम्बनः सदे—

त्यत्रापि यस्यात्मा केवलालम्बनस्तस्य सदा न समर्था इत्यन्वयः, वचनान्तरानुरोधात्,

गोमूत्रयावकाहारो ब्रह्महा मासिकैर्जपै—

रित्यादावपि मोक्षसाधनत्वाद्ष्टाक्षरब्रह्मविद्यायाः, मोक्षस्य च परमशुद्धिरेव विवक्षिता न पापक्षयमात्रं, ततश्च तत्तदावृत्तिविशेषात्तत्तत्पापवासनाविनिवृत्तिस्ततश्च पुष्कलशुद्धिरिति। अथ वा सकृत्कीर्त्तनादेव प्रक्षीणेऽपि पापे कस्य चिदश्रद्धारोपितमपूतत्वमात्मनि मन्यमानस्य तन्निबन्धनं दुःखं न निवर्त्तते; तस्य तदारम्भकपातकप्रध्वंसायावृत्तिविशेषयुक्तं मन्त्राध्ययनं विधीयते, प्रारब्धपरिक्षये च युक्तमेवावृत्त्यपेक्षणम्, आरोग्यादिषु तथादर्शनात्।

ननु यथोक्तावृत्तिविहीनाभ्यामपि श्रवणकीर्त्तनाभ्यां प्रारब्धपरिक्षयोऽपि श्रीस्कन्दपुराणनरसिंहपुराणयोर्दृश्यते? सत्यं, तत्तु श्रीमत्पञ्चाक्षरनारदादिमहापुरुषानुग्रहसहचारितयेति निश्चीयते; तस्मादावृत्तिविधीनामन्यार्थत्वादप्रारब्धप्राचीनपापक्षये सकृत्कीर्त्तनमेव साधनमिति निरपवादम्, अत्र वचनानि सन्त्यनन्तानि, तथा हि—

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रतीति,

परिकरबन्धश्चात्र प्रक्षीणपापत्वमेव, तत् खलु सोपानमपवर्गप्रासादारोहणस्य, तथा

हत्याऽयुतं पानसहस्रमुग्रं—

गुर्वङ्गनाकोटिनिषेवणं च।
स्तेयान्यसंख्यानि हरेः प्रियेण
गोविन्दनाम्ना निहतानि सद्य—
इत्यत्रापि सद्यस्तदानीमेवेत्यावृत्तिनैरपेक्ष्यं दर्शयति,
प्रातर्निशि तथा संध्या—
मध्यान्हादिषु संस्मरन्।
नारायणमवाप्नोति
सद्यः पापक्षयं नर—

इत्यत्रापि सद्य इत्युपजीव्यते, नरमात्रस्याधिकृतत्वाद् विश्वासादिनिरपेक्षता, प्रातरादीनां च विकल्पो; न तु समुचयः, सद्यस्त्वव्याघातात्, ततश्च कालविशेषो नादरणीय इत्यर्थः।

ननु कृते पापेऽनुतापो वै यस्य पुंसः प्रजायत इत्यादिवाक्यादनुतप्तस्य सकृन्नामोच्चारणेऽधिकारः प्रतीयते ? तत्राह—कृतइति। तयोरिति। तपोनिश्चययोरित्यर्थः। उभयं वा; न चेत्यनुषङ्गः। ततः किं—प्रकृते ? तत्राह—तत्रेति। विध्यपेक्षितमिति। विधेः पुरुषार्थपर्यवसायित्वादिति भावः। कथमनेन हितविशेषः समर्प्यते ? अत आह—यो हीति। परशब्दार्थमाह-परेति। एकशब्दार्थमाह-एकमिति। नन्वत्र संस्मरणस्य फलसंबन्धः श्रूयते न कीर्त्तनस्य ? तत्राह—हरीति। किमर्थोऽनुवादः ? तत्राह—स चेति। प्ररोचना प्राशस्त्यज्ञानं फलं यस्य सः। प्ररोचनामेवाह-समीचीनमिति। एतत्कीर्त्तनं संसारनिवर्त्तकं हरिस्मरणफलकत्वादिति भावः। तदेवं कृते पापेऽनुतापो वै इत्यादिकं नानुतप्ताधिकारिसमर्पकं किं तु पापक्षयफलपरं, तत्र दृष्टान्तमाह—स्वर्गेति। कथं तर्हि स्वर्गकामाधिकारित्वसिद्धिः ? तत्राह-अर्थतस्त्विति। प्राप्त एवेति-अर्थतइति भावः। अन्यथा प्रवृत्तावपि पापक्षयो न भवेदत आह-अवाद्ध्यादेवेति। प्रकारान्तरं सांकेत्यपरिहासादि। नन्वित्यादिशङ्कापरिहारौ प्रौढिवादेन, अर्थात्स्वर्गकामाधिकारिसिद्धेः। इह पुनरित्यादिकमपि प्रौढिवादो स्नानादथ वाऽस्नानादित्यादिवचनादेव सर्वाधिकारसिद्धेः, किं तु सांकेत्यपरिहासादिकृतनामकीर्त्तनेऽपि पापक्षयं कर्त्तुं प्रवृत्ति-

संभव एवोच्यते; अत एवेत्यादिरपि प्रौढिवादः, सुकरासुकरसाधारण-काम्यकर्मत्यागस्य भगवतोपदिष्टत्वात्। प्रायश्चित्तान्यशेषाणीति वाक्यं-नामावृत्तिपरत्वेन व्याचष्टे-कृष्णेति। उत्तरश्लोके कृत इत्युपजीव्यम्। सद्यःपदस्य व्यवधानेन संबन्धमाह—यस्यात्मेति। वचनान्तरेति। सकृन्नामोच्चारणस्य सकलपापक्षयहेतुत्वप्रतिपादकवचनान्तरानुरोधादित्यर्थः। अष्टाक्षरेति। नारायणविद्याया इत्यर्थः। श्रीमान् पञ्चाक्षरश्च नारदादिमहापुरुषानुग्रहश्च तत्सहचारितयेत्यर्थः। उत्तरो ग्रन्थः स्पष्टार्थः।

तथा

अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिवे—

त्यत्रापि; सद्य इति विचक्षितम्। सिंहत्रस्तैर्मृगैरिवेत्यस्यायमर्थः—यथा कश्चिद्राजकुमारः सिंहशिशुं परिगृह्य पञ्जरे निधाय पुष्णाति तेन च यूना परिचयप्ररूढानुरागेण वनान्तरे विहरति तत्साशङ्कितैर्वनगजव्याघ्रादितिर्मुच्यते दूरात्; तथा वदनपङ्कजस्थान्तरहरिनामधेयकण्ठीरवाद् भीतैः पातकैः पुरुषः परिह्रियत इति। तथा

यत्कीर्त्तनं यच्छ्रवणं यदर्पणं—
यद्वन्दनं यत्स्मरणं यदर्हणम्।
लोकस्य सद्यो विधुनोति किल्विषं—
तस्मै सुभद्रश्रवसे नमो नम इति,

अस्यार्थः—अर्पणमात्मनिवेदनम्, अर्हणमर्चनम्, अत इह षड्भक्तयो गृह्यन्ते, ताश्च प्रत्येकं किल्विषविधूननेन संबध्यन्ते, न च ताभिर्विशिष्टं किल्विषविधूननमेव वाक्यार्थः, तस्य फलत्वेनाविधेयत्वाद्, न च तासां पार्ष्टिकः परस्परान्वयः, क्रियात्वाद्, न चात्र चादिः

श्रूयते समासो वा द्वन्द्वः, येनाग्नेयादीनामिव समुच्चयः स्यात्, तस्मा"च्छ्लोकस्य सद्यो विधुनोति किल्बिषमि"ति पदचतुष्टयस्य तन्त्रेणावृत्त्या वा षडिमानि वाक्यानि, ततश्च तासां समशिष्टत्वादन्योन्यनिरपेक्षाणां पापक्षयसाधनत्वं, तच्च सद्य एवेति आवृत्तिनिरपेक्षतेति, अनुवादोऽप्ययमेतादृशं विधिमनुमापयतीति तद्द्वारेण प्रमाणमेव,

श्रीरामवाक्यं च—

सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वदा तस्य इति जन्मव्रतं ममेति।

अवतारान्तराणि कदा चित्कपटमप्यरिषु प्रयुञ्जते प्रयोजनवशाद् न भक्तेषु, श्रीरामचन्द्रः पुनः परिपन्थिष्वपि न मनाङ्मनोविसंवादिनीं वाणीं प्रयुङ्क्ते। अन्यान्यप्येवंजातीयकान्युदाहार्य्याणि, तस्मादप्रारब्धप्राचीनपापक्षयः सकृत्कीर्त्तनादेवेति।

अत्र शेनापीत्यत्र सिंहत्रस्तैर्मृगैरित्यसम्बद्धं, न हि सिंहत्रस्तैः पुमान्विमुच्यतेऽतो व्याचष्टे—यथा कश्चिदिति। कण्ठीरवः सिंहः। यत्कीर्त्तनमित्यादिवाक्ये षड्भक्तीनां संमुच्चितानाम् पापक्षयसाधनत्वं निराकरोति—तथेति। विशिष्टम् = महत्। न च तासामिति। अरुणयैकहायन्येत्यादौ क्रियासाधनानामारुण्यादीनां पार्ष्ठिकोऽन्वयो, न क्रियाणां, क्रियाश्चैताः कीर्त्तनाद्या इति न तासां पार्ष्ठिकान्वयेनारुणादिवत्समुच्चय इत्यर्थः। चादयो निपाताः समुच्चयावेदकाः; दर्शपूर्णमासाभ्यामितिवद् द्वन्द्वो वा न श्रूयत इत्याह—न चेति। तन्त्रेणेत्यापाततः। सकृदुच्चरितस्य पदेषु वाक्यार्थेष्वन्वयानुपपत्तेः। तासां भक्तीनाम्। तथाऽपि कथं सकृन्नामकीर्त्तनस्य पापक्षयसाधनत्वं? तत्राह-तच्चेति। नन्वस्मिन्वाक्ये विधिर्न श्रूयते कथम् प्रामाण्यं? तत्राह-अनुवादोऽपीति। तद्द्वारेण = विधिद्वारेण। विधिश्च सकृन्नाम कीर्त्तयेदित्यादिरनुमेयः। श्रीरामेणोक्तत्वात्सकृत्त्वं तत्तात्पर्यविषय इत्याह-अवतारान्तराणीति। परिपन्थिनो विरोधिनः।

नन्वनागतानामनुपश्लेषोऽपि सकृत्कीर्त्तनादेव दृश्यते—

वर्त्तमानं च यत्पापं यद्भूतं यद्भविष्यति ।
तत्सर्व्वं निर्दहत्याशु गोविन्दानलकीर्त्तनमिति ?

तदसद्, अत्राप्यावृत्तेरुपसंहाराद्, न चाशुशब्दस्तदुपसंहारविरोधी, आशुभावो हि शीघ्रता, सा च सातिशया, अतिशयश्चापेक्षिकः ततश्च, साधनान्तरेभ्यः सकाशादाशुत्वं; न पुनः सद्यः साधनत्वमिति, यत्पुनरुक्तं— मरणावसरे कृतस्य कीर्त्तनस्य विश्वासाद्यभावेऽपि सर्व्वाघसंहारित्वमिति ? तदप्यसद्,

म्रियमाणो हरेर्नाम गृह्णन् पुत्रोपचारितम् ।
अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन्निति
स्वयमेव मरणकालस्याविवक्षितत्वप्रतिपादनाद्,

नन्वपिना ग्रस्तमविवक्षितं भवति; तत्प्रतियोगि च कैमुत्येन संबध्यते; तत्र श्रद्धायाः कैमुत्येनान्वयादश्रद्धेयमेवापिशब्देन संबध्यते; पुत्रोपचरितमपि हरेर्नाम गृणन्निति; तस्मात्तस्या एवाविवक्षा न म्रियमाणतायाः ? अत्रोच्यते—हरेर्नामग्रहणमिह विशेष्यं तस्य च म्रियमाणः पुत्रोपचारितं श्रद्धया चेति विशेषणानि; प्रधानान्वयित्वाद् गुणानां, विशेषणं च विवक्षितमविवक्षितं वा, तत्र कैमुत्येनान्वयो विवक्षितस्य, अविवक्षितस्य पुनरपिना, तत्र यदि म्रियमाणो मुख्योऽधिकारी तर्हि स्वस्थोऽप्येवं किमुत म्रियमाण इत्यवक्ष्यद्, न चैवमवोचत, तस्माद् म्रियमाणो नश्यच्चेताः श्रद्धातुमसमर्थोऽपि पुत्रोपचरितमपि गृणन्नजामिलो हरेर्धामैवागात् किमुत श्रद्धया

हरिमेव गृणन्निति; अविवक्षितैव म्रियमाणता, श्रद्धाऽपि मुक्त्यर्थमेव विधीयते न पापक्षयमात्रार्थम्, अगाद्धामेति वचनात्, सा च

यद्यस्तीति न वक्तव्यं पुत्रसंदिग्धकं वचः।
सर्वस्मादधिकोऽस्त्येन शिवः परमकारणमि—

त्याद्युक्तलक्षणा, न तु कीर्त्तनविधिविषयिणी, तस्याः फलोपकारित्वस्य निराकृतत्वाद्। अपि चाजामिलस्यापि न मुख्या म्रियमाणता कीर्त्तनोत्तरकालमप्यवस्थानप्रतिपादनात्, तस्य च तावतैव पापक्षयप्रतिपादनाद्, अविवक्षित एव मरणकालः "नामानि येऽसुविगमे विवशा गृणन्ती"त्यत्रापि विवशसाहचर्यादसुविगमो न विवक्षितः, न हि विवशत्वं विधीयते; तद्वदसुविगमोऽपि, ततश्चासुविगमेऽपीत्यर्थः न पुनरसुविगमएवेति, एवं मरणे हरिमुच्चरेदित्यत्रापि मरणेऽपि हरिशब्दमुच्चरेदिति व्याख्येयं- समानविषयत्वात्, तत्सालोक्यादिफलेषु पुनरुपासनेष्वन्त्यप्रत्ययोऽभ्यर्हितः, "यथा क्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"तिश्रुतेः, ततश्च

प्रयाणकाले मनसाऽचलेन
बुद्ध्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यमि—

त्यादिषु विवक्षित एव कालः। ये पुनर्ग्रहणादयः कालविशेषाः पर्वताग्रादयश्च देशविशेषाः तत्र तत्रोक्तास्ते पुरश्चरणादिकर्माङ्गभूताः, पुरश्चरणं च मन्त्राणां संस्कारकम्;आधानमिवाग्नीनां, संस्कृतानां च तेषामैहि-

कामुष्मिकफलसाधनेषु कर्मसु विनियोग इति तत्रैवोपयोगस्तेषां न तु पापक्षयोपयोग इति। ये च प्रत्याहारादयो धर्माः

मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम्।
अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतव—

इत्यादिशास्त्रोक्ताः, तेऽपि न जपमात्रोपयोगिनः तत्संपत्तिहेतुत्वाभिधानात्, संपत्तिश्च विशिष्टेष्टप्राप्तिसाधनत्वलक्षणा; तस्यां चोपयुज्यन्त एव ते, पापक्षयः पुनः कीर्त्तनादेवेति पटहघोषः पुराणानाम्।

उपसंहारादिति। अध्याहारादित्यर्थः। नन्वाशुशब्दात्सकृत्त्वम् प्रतीयते? तत्राह-न चेति। अपिनाऽजामिलोऽपीत्यपिशब्देन, तत्प्रतियोग्यविवक्षाविरुद्धम्। ततः किं? तत्राह—तत्रेति। किमुत श्रद्धया गृणन्निति वचनादिति भावः। अश्रद्धेयमेवाह-पुत्रेति। गृणन्नित्यस्योपरि हरेर्धामागादिति द्रष्टव्यम्। तस्या इति। अश्रद्धाया इत्यर्थः। विशेष्यं प्रधानं फलत्वादिति भावः। तस्य चेति। विशेषणानीति सम्बन्धः। तत्र हेतुमाह—प्रधानेति। विशेषणद्वैविध्यमाह—विशेषणं चेति। कैमुत्यान्वयस्यापिशब्दान्वयस्य च व्यवस्थामाह—तत्रेति। प्रकृत आह—तत्र यदीति। फलितमाह—तस्मादिति। न चैवं श्रद्धाऽपेक्षत्वं प्रतीयते किमुत श्रद्धया गृणन्नितिवचनात्तत्राह—श्रद्धाऽपीति। तत्र गमकमाह-अगाद्धामेति। सालोक्यस्य मुक्तिमध्ये गणनादिति भावः। ननु कीर्त्तनविधिविषयिणी श्रद्धा कीर्त्तनफलोपकारिणी न मुक्तधर्मा? तत्राह—सा चेति। परमात्मविषयिणी श्रद्धेति भावः। कीर्त्तनश्रद्धायाः फलोपकारित्वं च नास्तीत्याह-तस्या इति। असुविगमो मरणं, विधीयते विवक्षितमित्यर्थः। ततश्चाविवक्षितविधेयसाहचर्यादसुविगमोऽप्यविवक्षितइत्यभिप्रायः। ततश्चाविवक्षासूचकोऽपिशब्दोऽध्याहर्त्तव्य इत्याह-ततश्चेति। ननु नामोच्चारणे मरणकालाविवक्षायामुपासनेऽप्यविवक्षा मरणकालस्य प्रसज्येत ततश्च प्रयाणकाल इत्यादि वचनविरोधः? तत्राह-तत्सालोक्येति। हरिम्तच्छब्दार्थः। ननु नामात्मका मन्त्राः पुरश्चरणं च तेषामुच्चारणं तत्र देशकाल-

विशेषादयोऽङ्गत्वेन स्मर्यन्ते ततः कथं निरपेक्षं नामोच्चारणं पापक्षयहेतुः? तत्राह—ये पुनरिति। न तु पापेति। पापक्षयस्तु देशकालाद्यपेक्षपुरश्चरणसंस्कृतानामपि नामात्मकमन्त्राणामुच्चारणादेवेत्यर्थः। विशिष्टमिष्टं मोक्षः।

अथ वा जपस्यैवैते धर्मा न तु कीर्त्तनस्य; अन्यो-हि जपोऽन्यच्च कीर्त्तनं भिन्नविषयत्वात्तयोः, तत्र मन्त्रोच्चारणं जपः, नामोच्चारणं तु कीर्त्तनं, मन्त्रोऽपि नाम सः; यः स्वरादिविशिष्टो देवताप्रकाशको वर्णसमुदायः, विशिष्टदेवतावाचकं तु पदमात्रं नाम,

"क जपो वासुदेवेति मुक्तिबीजमनुत्तममि"त्यत्र तु कीत्तनमेव जपशब्देनोच्यते संबुद्ध्यन्तत्वाद्वासुदेवशब्दस्य, श्रीमद्द्वादशाक्षरविवक्षायां हि चतुर्थ्यन्तेन तेन भवितव्यम्।

ननु जपगता एव धर्मा देवतासामान्यात्कीर्त्तनेऽतिदिश्यन्ते

श्रीविष्णुधर्मे—

चक्राङ्कितस्य नामानि सदा सर्व्वत्र कीर्त्तयेत्।

नाशौचं कीर्त्तने तस्य स पवित्रकरो यत इति देशकालशौचानामनपेक्षणीयत्वप्रतिपादनादेव केवलश्रुतिविरोधाच्च?

+ननु कीर्त्तनेऽपि श्रूयन्ते धर्म्माः—

नक्तं दिवा च गतभीर्जितनिद्र एको—
निर्द्वन्द्व ईक्षितपथो मितभुक् प्रशान्तः।
यद्यच्युते भगवति स्वमनो न सज्जे—
न्नामानि तद्रतिकराणि पठेदलज्ज—

इति? सत्यं श्रूयन्ते; ते तु मोक्षसाधनस्य कीर्त्तनस्या-

ङ्गभूताः; न पुनरघविघातकस्य, यत्रच्युते मनो न सज्जेदिति समाधेरनुकूलत्वेन कीर्त्तनस्य विधानात्, समाधेश्च मोक्षफलत्वेन प्रसिद्धेः।

ननु कीर्त्तनं क्रिया, न च क्रियासाधनो मोक्षः, तस्य श्रुतिस्मृतीतिहासपुराणागमयुक्तिभिर्ज्ञानैकोपायत्वेनाचार्य्यैरवधारितत्वाद् ज्ञानसाधनत्वमेव तस्य मोक्षसाधनत्वम्, अत एव समाधेः कार्य्ये विधानं, न हि समाधिरपि मोक्षसाधनं, किं तर्हि? ज्ञानसाधनमेव, तदपि न साक्षात् श्रवणवद्, अपि तु प्रतिबन्धनिरासद्वारेण, एवं कीर्त्तनमपि।

जपकीर्त्तनयोर्भेदेन समाधानान्तरमाह–अथ वेति। विषयभेदेन तयोर्भेदमाह–तत्रेति। मन्त्रनाम्नोर्भेदमाह–मन्त्रोपीऽति। आदिशब्देन बीजादि। नाम्नो लक्षणमाह–विशिष्टेति। ननु कीर्त्तनेऽपि जपशब्दो दृश्यते तत्राह–क जप इति। लाक्षणिक इति भावः। किमिति लाक्षणिकं; वासुदेवविधैव विवक्ष्यतां? तत्राह—संबुद्ध्यन्तत्वादिति। संबोधनान्तत्वादित्यर्थः। संबोधनान्तत्वेऽपि न वासुदेवविधाविवक्षा, न चापशब्दत्वेनानुच्चारणप्रसङ्गः, हरिनामानि कीर्त्तयेदिति प्रातिपदिकमात्रोच्चारणस्य विहितत्वात्। ननु जपगताः शौचापेक्षत्वादयः कीर्त्तनेऽप्यतिदिश्यन्तां देवतासामान्याद्? नेत्याह–न त्विति। केवलेति। देशकालशौचापेक्षारहितस्य नामकीर्त्तनस्य पापक्षयसाधनत्वे विरोधाभावाच्चेत्यर्थः। नन्विति। श्रूयन्ते धर्मा इति। मोक्षसाधनार्था इति शेषः, समाधत्ते—सत्यमिति। ज्ञानोपायत्वेनेति बहुव्रीहिः। आचार्यैः = व्यासादिभिः। समाधत्ते—ज्ञानेति। श्रवणवदिति व्यतिरेकदृष्टान्तः—यथा श्रवणं प्रमाणस्वरूपान्तःपातितया साक्षात्साधनं नैव समाधिरित्यर्थः। प्रतिबन्धो = विपरीतभावना। परम्परासाम्येनाह—एवमिति।

तत्रायं क्रमः-कीर्त्तनात् पापक्षयः, तदावृत्त्या तद्विषयाणां वासनानां प्रचयः; अपचयश्च पापवासनानां, ततो भगवज्जनसेवासातत्यं, ततस्तदुपवर्णितमहिमनि

भगवति पुण्यश्लोकशेखरे भगवती नैष्ठिकी भक्तिः, ततः शोकादीनामत्यन्तोच्छेदः, ततः सत्त्वस्य परमोत्कर्षः, ततस्तत्त्वसाक्षात्कारः, ततो मुक्तिरिति, अयमर्थः श्रीभागवते सविस्तरमुपवर्णितः, तत्र तत्रोक्तं च भगवता-

मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यत इति,

तत्र श्रुतिशिरःसिद्धान्तं यस्य श्रुतवतोऽपि कुतश्चित्प्रतिबन्धात्तत्त्वज्ञानमुत्पन्नमपि निमीलितमिव तस्य भगवद्भक्तिरुक्तया रीत्या प्रतिबन्धं निरुध्य तत्त्वज्ञानमुन्मीलयति, यः पुनरश्रुतवेदान्तसिद्धान्त एव जगदेकनियन्तुर्निर्यन्त्रणदयाऽमृतमहार्णवस्य महाविष्णोः प्रह्लादहृदयसुधासरित्पतिपर्यङ्कशायिनः श्रीनृसिंहस्य नामानि निरन्तरमावर्त्तयति; तस्य भगवान् स्वयमेव देहावसानसमये संसारतारकमात्मज्ञानमनुगृणाति, श्रूयते हि तापनीये—"देहान्ते देवः परं ब्रह्मतारकं व्याचष्टे-इति तान् प्रजापतिरब्रवीद् एतैर्मन्त्रैर्देवं स्तुध्वं ततो-देवः प्रीतो भवति स्वात्मानं दर्शयति य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति सोऽमृतत्वं च गच्छति, य एवं वेदेति च," अत्र च स्तुतो देवः प्रीतो भवति स्वात्मानं दर्शयतीत्येतावदुपजीव्यते, जपकीर्त्तनयोः साधारण्यात्, साधारण्यं च प्रसिद्धमेव, तथा हि—स्तुतः प्रीतो भवतीति स्वात्मनि परत्र च दृष्टमेव, प्रीतश्च स्वात्मानं दर्शयेदेव, अवञ्चनरसत्वात् प्रेम्णः।

परम्परामेव प्रपञ्चयति-तत्रेति। तत्र प्रमाणमाह-अयमर्थ इति। व्यवस्थाऽन्तरमाह—तत्रेति। अनुगृणाति = उपदिशति। कथमशरीर-उपदिशेद्? अतआह—श्रूयते हीति। अतएवाह—अत्र चेति। ननु जपमात्रस्येदं प्रयोजनं न कीर्त्तनमात्रस्येति? अतआह-जपेति।

साधारण्यं समानफलत्वम् । नन्वेवमपि मन्त्रराजेनैव स्तुतिरेवंफलिका स्यात् ? नेत्याह—स्तुतिस्त्विति । तत्र हेतुमाह—नाम्नामिति । दीर्घतमा मन्त्रस्यर्षिः । तच्छ्लोकार्थमाह—अस्तीति । अधिष्ठानमुपादानम् । अधिष्ठातारं कर्तारम् । औपनिषदा वेदान्तिनः । विपरिणामो विध्यर्थत्वेन व्याख्यानात् । ननु गुणकीर्त्तनं सर्वाधिकारमुच्यते न च वैदिकैर्मन्त्रैः सर्वे गुणकीर्त्तनं कर्त्तुं शक्नुवन्ति ? तत्राह—न चैवमेवेति । श्रौतैर्वैदिकैः । तान्त्रिकैरागमिकैः । पौरुषेयैः संस्कृतैः प्राकृतैश्च । न च प्राकृतानामपशब्दत्वान्न म्लेच्छतवा इति निषेधविषयत्वं ? विहिते निषेधाप्रवृत्तेः । न च विहितत्वासिद्धिः ? यथा विद तथा स्तुध्वमित्यनेनैव संस्कृतानभिज्ञान्प्रति विहितत्वात् । न च मन्त्रत्वाद्विधायकत्वं ? मूलकृतैवानुपदं निराकरिष्यमाणत्वात् । न चैतावता संस्कृतानभिज्ञानां प्राकृतेन परमेश्वरगुणानुवादेऽनधिकार इति वाच्यम् ? यथा विदेत्यस्य विधेः संकोचप्रसङ्गात् । तथा हि श्रुतिस्मृतिपुराणादिषु भगवद्गुणानुवादः कर्तव्य इति विधिः सुप्रसिद्धः । तत्र करणाकाङ्क्षायां सामर्थ्याज् जिव्हा संबध्यते तत्र चाधिकाराकाङ्क्षायां सामर्थ्यान्मनुष्यमात्राधिकारत्वं, विशेषग्राहकमानाभावाच्च । न च संस्कृतवाक्यैरिति क्व चिच्छ्रूयते सामर्थ्यात्तु संस्कृतप्राकृतसाधारणवाक्यमात्रमन्वेति । न च म्लेच्छतवै, म्लेच्छो ह वा एष यदपशब्द इति निषेधादर्थान्संस्कृतवाक्यैर्गुणानुवादः कर्त्तव्य इति वाच्यं ? निषेधो हि प्राप्तिमपेक्षते, प्राप्तिश्च रागतो विधितश्च, तत्र प्राकृतवाक्यैर्भगवद्गुणानुवादो न रागतः प्राप्तो भोजनवद् दृष्टफलत्वाभावाद्, विधितः प्राप्तत्वे सिद्धं नः समीहितं तत्र निषेधाप्रवृत्तेः, विहितनिषिद्धत्वे विकल्पापत्तेः षोडशिग्रहणवत् पक्षे विहितत्वसिद्धेः । न च यथा कथं चिद्भगवद्गुणानुवादो लोकपूज्यताहेतुरिति रागतः प्राप्तिरिति शङ्कनीयं ? तथा सति । संस्कृतवाक्यैरपि भगवद्गुणानुवादस्याविहितत्वापत्तेः । अग्निहोत्राद्यनुष्ठानस्यापि तत्त्वाच्च, सर्वत्र पूजाविधासु गीतवाद्यादिविधानाच्च, यथा—

अन्नाद्यगीतवाद्यानि पर्वणि स्पुरुतान्वहमि—

त्येकादशस्कन्धे, तत्रैव पूजाप्रकरणे—

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपी—

ति प्राकृतानामेव कण्ठरवेण गृहीतत्वाच्च । अत्र स्तवस्तोत्रयोर्भेदो विशदीक्रियते—पौराणैः प्राकृतैरिति, यद्वाऽप्रगीतवाक्यसा-

ध्यानि स्तवाः प्रगीतवाक्यसाध्यानि स्तोत्राणीति वैदिकस्तोत्रस्य तादृशत्वाद्, अथ वा स्तवा गुणकीर्त्तनानि, स्तोत्रैरिति ग्रन्थनामधेयम्। तेषामुच्चावचत्वं दर्शयति—पौराणैः प्राकृतैरिति। उच्चावचत्वं प्राकृतविशेषणं वा, तच्च कर्तृकृतं, भगवद्गुणकीर्त्तनस्य स्वरूपेणोच्चावचत्वाभावाद्, ग्रन्थकृतस्योच्चावचत्वस्य पौराणैः प्राकृतैरित्यनेनैव सिद्धत्वात्, सर्वथाऽपि प्राकृतानां कण्ठरवेण विधानम्। किं च विष्णुपुराणादौ चैद्यस्य भगवति त्वंकथाऽऽदिभिर्द्वेषं विदधतोऽपि भगवत्प्राप्तिः श्रूयते, न चासौ संस्कृतवाक्यैरेव भगवद्द्वेषं विदध इति प्रमाणमस्ति, तस्माद्यथा कथं चिद्भगवद्गुणानुवादो विहित एव, अन्यथा पौराणिकानां प्राकृतवाक्यैरर्थकथनाचारो बाध्येत। अत एव गोपीरधिकृत्य;

यासां हरिकथोद्गीतं पुनाति भुवनत्रय—

मित्युक्तं श्रीभागवते। अत एव तच्छ्रवणमपि विहितमेव भगवत्स्मारकत्वात्। तत्स्मरणस्य "चापवित्रः पवित्रो वे"त्यादिवाक्यैः पापक्षयहेतुत्वप्रतिपादनात्। अत एव "ग्राम्यगीतं न शृणुयादि"ति वाक्ये भगवद्गीतं तु शृणुयादेवेत्युक्तं श्रीधरस्वामिभिः, अतश्च प्राकृतवाक्यैरहर्निशं परनिन्दाऽऽदि कुर्वन्तो ये प्राकृतवाक्यैर्भगवद्गुणानुवादमकर्तव्यं निरूपयन्ति तेषां भगवदनुरागाभाव एवापराध्यतीत्यलमतिविस्तरेण।

स्तुतिस्तु श्रीमन्मन्त्रराजेन मन्त्रान्तरैर्वा नामभिर्वा, नाम्नां च सर्वेषामेव श्रुतिसंमतत्वात्,

"तमु स्तोतारः पूर्व्यं यथा विद
ऋतस्य गर्भं जनुषा पिपर्त्तन।
आस्य जानन्तो नाम चिद्विवक्तन
महस्ते विष्णो सुमतिं भजामहे" इति,

श्रूयते दीर्घतमसो वाक्यमेतद्, अस्यार्थः—उकारः छन्दःपूरणार्थः, हे जानन्तः! स्वार्थकुशला जनास्तं देवम्, अस्ति कश्चिदीश्वर इत्याबालगोपालप्रसिद्धं; पूर्व्यं पुरातनं सर्वस्याधिष्ठानमधिष्ठातारं च; तस्य गर्भम् उपनिषदस्तज्जन्यज्ञानस्य वा जठरे वर्त्तमानम्; औपनिषदसिद्धान्त-

सिद्धयाथात्म्यं, स्तोतार; श्रौतैस्तान्त्रिकैः पौराणिकैः पौरुषेयैर्वा स्तुध्वमिति विपरिणामः, न चैवमेव स्तोतव्यमिति कश्चिदस्ति नियमः, यथा विद यथा जानीथ तथा स्तुध्वं मन्त्रैः स्तुध्वमिति भावः, ततश्च जनुषा पिपर्त्तन छान्दसस्तनबादेशः कर्मकर्तृव्यत्ययश्च जनुषा जन्मना पिपर्त्तन पिपृत पूर्यध्वं जन्मनः पूर्त्तिं प्राप्नुत जन्मानि समापयतेति भावः, अथ वा तं देवं जनुषा पिपर्त्तन स्वच्छन्दचरितेन बहुविधेन जन्मना पूरयत मत्स्याद्यवतारैरन्वितं वर्णयतेत्यर्थः। अथैवमपि न यं स्तोतुमसमर्थाः, अस्य भगवतः श्रीमन्नामाप्याविवक्तन सदा कीर्त्तयत, हे विष्णो व्यापक ! ते महः प्रकाशं स्वत्स्वरूपप्रकाशिकां सुमतिं शोभनां मतिं भजामहे इति, अत्रापि व्यत्ययः भजामहे इति ब्रह्मविद्यामाशासानाः कीर्त्तयतेत्यर्थः, मतश्चापवर्गफलकज्ञानसाधनत्वमेवापवर्गसाधनत्वं कीर्त्तनस्य, मन्त्रोऽप्ययं विधायको भविष्यति,

विधिशक्तिर्न मन्त्रस्य नियोगेनापनीयते ।

स्वतो विश्वस्यति ह्येष नियोगात् स्मारयिष्यतीति

न्यायेन । एवमन्येऽपि नाममन्त्रस्यैव पुरुषार्थसाधनत्वद्योतका मन्त्राः सन्त्यनेकशः–

"कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम"।

"सदा ते नाम स्वयशो विवक्मि" ।

"भूरि नाम मनामहे"

इत्यादयः, तेषां च तैस्तैरसाधारणैरमृतानां प्रथमस्येत्यादिभिर्लिङ्गैर्भगवद्विषयत्वमाकाशस्तल्लिङ्गादिति न्यायेन पुरुषार्थसाधनत्वं च नाम्नो ज्ञानद्वारेणैवाभिप्रेतं पूर्वेण समानार्थत्वात् ।

छान्दसइति। पिपृतेति वक्तव्ये पिपर्त्तनेति छन्दसि भवति। कर्मेति। जन्म पूर्यतामिति कर्मवत्तृप्रयोगे कर्तव्ये जनुषेति करणत्वनिर्देशो व्यत्यस्तः छान्दसः। फलितमाह-ब्रम्हेति। ननु मन्त्रस्यास्य कथं विधायकत्वं तत्राह-मन्त्रोऽपीति। नियोगो विनियोगः। यथा वसन्ताय कपिञ्जलानालभेतेति मन्त्रोऽपि विधायकोऽपीति। कथमेतेषां परमात्मविषयत्वं? तत्राह-तेषां चेति। प्रथमे मन्त्रे—"अग्नेर्वयं प्रथमस्यामृतानामि"ति पूर्वपादो भगवद्विषयत्वे लिङ्गम्। द्वितीये "न ते गिरा अपि मृष्येतुरस्य न सुष्टुतिमसुर्यस्य विद्वानि"ति वाङ्मनसागोचरत्वे लिङ्गम्। तृतीये "मर्त्ता अमर्त्यस्य ते" इति पूर्वपादोक्तं लिङ्गम्। आकाशइति। "अस्य लोकस्य का गतिरित्याकाश इति होवाच"-इत्याकाशशब्दो ब्रम्हपरः। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्तइति ब्रम्हणो लिङ्गादित्यर्थः।

"प्रतत्ते अद्य शिपिविष्ट! नामार्यः शंसामि वयुनानि विद्वान्।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके"

इत्यादिषु स्पष्टमेव भगवद्विषयत्वम्। अस्यार्थः-शिपिः शरीरं,-हे शिपिविष्ट अन्तर्यामिन्! तत्प्रसिद्धं ते तव नाम प्रशंसामि प्रकर्षेण कीर्त्तयामि, यद्यप्युत्तमपुरुषोऽयं विधिशक्तिप्रतिबन्धकस्तथाऽपि मन्त्रलिङ्ककल्पितो विधिः स्मृतीनां मूलमभिप्रेयते, कीर्त्तनस्य फलमाह-आर्य इति, श्रेष्ठ इत्यर्थः, वयुनानि सामर्थ्यानि नाम्नस्तवैव वा विद्वान् जानन्नित्यर्थः, अनेन तत्रैव प्रवृत्तिहेतुरुक्तः। उत्तरार्धे त्वा त्वांगृणामि स्तौमि तवसं महान्तम् मतव्यानल्पोऽहं क्षयन्तं निवसन्तमस्य रजसो लोकस्य पराके परे पारइत्यर्थः। ननु नामकीर्त्तनस्य क्रियारूपस्य कथं मोक्षसाधनत्वं? तत्राह-पुरुषार्थेति। पूर्वेण तमु स्तोतार इत्यनेन।

पुराणवाक्यं च—

यावज्जीवं प्रणवमथ वाऽऽवर्त्तयेद्रुद्रियं वा
याजुर्वेदं वसतिमथ वा वाराणस्यां विदध्यात्।
हित्वा लज्जां कलिमलकुलच्छेदकानीरयेद्वा
विष्णोर्नामान्यनिशममृतत्वाप्तिरेषा चतुर्धे-

ति, वाराणसीवासस्य तारकब्रह्मबोधद्वारेणामृतत्वप्राप्तिसाधनत्वं काशीखण्डादिषु प्रसिद्धं, तत्समभिव्याहारा-

दनुकीर्त्तनस्यापि तद्वदेवेति। एवं चामृतत्वसाधनस्य कीर्त्तनस्य धर्मा गतभीत्यादयो; न पापक्षयसाधनस्य, पापक्षयस्तु यथा कथं चिज्जिह्वाऽङ्गनमागतान्नाममात्रादेवेति, अत एव सौरपुराणे निरन्तरं हननापहारादिषु प्रवृत्तस्यापरानपि तत्रैव प्रवर्त्तयितुमाहर प्रहर संहरेति व्याहरतो व्याडिनाम्नो व्याधस्य पदान्तरावयवत्वेन प्रसङ्गागतादपि हरशब्दात् सर्व्वाघसंहारो वर्णितः, तदभ्यासाहितात्संस्कारप्रचयादनन्तरजन्मनि तत्त्वज्ञानमपि वर्णितम्।

ननु यदि न का चिदितिकर्त्तव्यता कीर्त्तनस्य कथं विधानम् अङ्गप्रधानवत्यां भावनायां युगपत्पुरुपनियोग इति शावरभाष्यं, भट्टवार्त्तिकं च—

किमाद्यपेक्षितैःपूर्णः समर्थः प्रत्ययो विधाविति ?

सत्यवदनादीनामिवेति ब्रूमः, न हि तत्र किं चिदङ्गमुपदिश्यते, नाप्यतिदेष्टुं शक्यते, तल्लिङ्गाभावाद्, न चैतावता प्रतीयमानो विधिरपलपितुं शक्यते, तथेहापि भविष्यति।

ननु तत्रापि लौकिकं किं चिदुपकारकमस्त्येव सर्व्वथैवानुपकृतत्वे तु तत्रापि विधानं नाभविष्यदेव? इहापि तर्हि मनोवाक्कायस्थानानामन्योन्यसंयोगो लौकिकएवोपकारको भविष्यति येन विना शब्दोच्चारणमेव न संभवति, अथ वा किमस्माकं विध्यन्तरसाधर्म्यसमर्थनेन ? ईदृश एवायमपूर्वो विधिः स्वरूपकथनं वा प्रमाणान्तरानवगतं कीर्त्तनस्य पापक्षयसाधनत्वमबाधितमवगम्यमानमपह्नोतुं न शक्नुमः।

ननु किं समस्तानामेव भगवन्नाम्नामेतादृशं सामर्थ्यमुत व्यस्तानामपि ? न तावत्समस्तानामेव, अवशेने-

त्यादिविधिना विरोधाद्, न ह्यवशेन समस्तानामुच्चारणं संभवति, अथ व्यस्तानां; तत्रापि किं सर्वेषामेव; उत केषां चिदेव ? तत्र यदि सर्वेषामपि नरकस्टष्टेरानर्थक्यं प्रसज्येत; न ह्यजातिवधिरस्य कस्याप्येतत्संभाव्यते यन्नामसहस्रमध्ये किं चिदपि कदा चिदपि कथं चिदपि न शृणोति न गृह्णाति, अपि च यदि सर्वेषां समानं सामर्थ्यम् एकेनैव पुरुषार्थसिद्धेरन्येषामानर्थक्यं प्रसज्ज्येत, अन्यच्च समानमहिम्नां नाम्नां समाहारे तन्महिम्नामपि समाहाराद् एकस्य श्रीरामनाम्नो नामसहस्रसाम्याभिधानं नावकल्पते, न हि प्रदीपसहस्रस्य यावान् प्रकाशः तावानेकस्य प्रदीपस्य भविष्यति, सामर्थ्यस्य च वैषम्ये तु भवत्येव, यावत् खलु खद्योतसहस्रस्य तेजस्तावदेकस्यापि प्रदीपस्य, अथ केषां चिदेव; तर्हि

सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः।
यच्चाभिरुचितं नाम तत्सर्व्वार्थेषु योजयेदिति

श्रीविष्णुधर्म्मगतवचनविरोधः, अन्येषामानर्थक्यं च तदवस्थमेवेति ?

अत्राभिधीयते—सर्वेषामपि भगवन्नाम्नां प्रत्येकमेतादृशं सामर्थ्यं, न च नरकसृष्टेरानर्थक्यं, दग्धेऽपि कथंचित्प्राचीने पाप्मनि तदुत्तरकालभाविभिरंहोभिर्महद्भमानैश्च नरकपातस्यापि संभवाद्, न चावृत्तिगुणकमेव कीर्त्तनं सर्वस्यापि भविष्यतीति कश्चिदस्ति नियमः, अत एव भरतदेवस्यापि ऋषभदेवेनानुगृहीतस्यापि प्रतिबद्धापरोक्षानुभवत्वाद् अन्तरायैरत्यन्तसमुच्छिन्नभगवदुपासनत्वाच्च तदुत्तरकालभाविना मृगासक्तिरूपेण कर्म्मणा निकृष्टदेहारम्भः, अथ वा मृगत्व-

मपि तज्जातिस्मरणवैराग्यभृतदयाऽऽदिगुणोपेतत्वान्मोक्षानुकूलमेवेति न तदारम्भकस्य कर्म्मणो निवृत्तौ प्रयतते भक्तिः। जयविजययोश्च वैकुण्ठवासिनोरपि ब्रह्मविदवमानादधःपतनं, ब्रह्मविदवमानजनितं हि दुरितं दुरत्ययं भगवदुपासनेनापि भगवद्भक्तावमानजनितं च, प्रपञ्चितं चैतत्तृतीयस्कन्धे—

सोऽहं भवत्समुपलब्धसुतीर्थकीर्त्ति—
रिछन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिमि—
त्यादिना, नवमे चाम्बरीषोपाख्याने—
अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज !
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रिय—
इत्यादिना।

अमृतत्वं मोक्षः। गतभीत्यादयो "नक्तंदिवा च गतभीर्जितनिद्र एक"इत्यादिपूर्वोदाहृतश्लोकोक्ताः। यथा कथं चिज्जिह्वाऽङ्गनमागतादित्युक्तं सौरपुराणेतिहासेन द्रढयति-अतएवेति। किमादीति। किं केन कथमित्यपेक्षितैः फलकरणेतिकर्तव्यतांऽशैः पूर्णः प्रत्ययो विधाने समर्थ इत्यर्थः। सत्येति। "सत्यं ब्रूयाद्धैर्यं कुर्यात्प्राङ्मुखोऽन्नान्यश्नीते"त्यादयः। स्वरूपकथनेऽपि पापक्षयसाधनत्वमस्त्येवेत्याह—प्रमाणान्तरेति। अनधिगतमबाधितमिति हेतुगर्भं विशेषणद्वयम्। नन्विति। मिलितानामेतत्सामर्थ्यं प्रत्येकं वेति विकल्पार्थः। नरकसृष्टेरानर्थक्यं परिहरति-दग्धेऽपीति। आवृत्तनामकीर्त्तने तर्हि कथं नरकपातस्तत्राह्-न चेति। नामकीर्त्तनावृत्तिशून्यानामुत्तरकाले पापाचाराणां नरकपात इति भावः। तत्रोदाहरणमाह—अतएवेति। प्रतिबद्धोऽपरोक्षानुभवो यस्य तस्य भावस्तत्त्वम् अत्यन्तसमुत्पन्नं भगवदुपासनं यस्य तस्य भावस्तत्त्वम्। नन्वावर्त्यमाना हरिभक्तिः कथं मृगासक्तिं नोन्मूलयेत्? तत्राह्-अथ वेति। भवद्भ्यः समुपलब्धा सुतीर्थरूपा कीर्त्तिर्येन सः। स्वबाहुमिन्द्रमपि; इति सनकादीन्प्रति भगवद्वाक्यम्।

वेनस्य तु भगवन्निन्दाप्रतिबद्धसामर्थ्यं सकृत्कीर्त्तन-

-मावर्त्यमानमपि न पापक्षयायालं, शिशुपालादीनां पुनान्निर्भरवैरानुबन्धपरिकल्पितसंपदः समाधेरिव निन्दादोषस्यापि दग्धत्वात् पुरुषार्थप्राप्तिरिति स्वयमेव सप्तमाद्ये समर्थितं श्रीशुकेन।

यदप्युक्तम्—एकेनैव पुरुषार्थसिद्धेरन्येषामानर्थक्यमिति, तदप्ययुक्तं, पुरुषभेदेन सर्वेषामपि पुरुषार्थसाधनत्वोपपत्तेः।

यत्तु समानमहिम्नां समाहारे तत्तन्महिम्नामपि समाहारारराद् नैकस्य तादृशो महिमेति ? तदपि परिच्छिन्नप्रभावेषु प्रदीपादिषु घटते; न पुनर्निरङ्कुशमहिमसु भगवन्नामसु,

न खलु चिन्तामणीनां निचयस्य; एकस्य वा चिन्तामणेः, कल्पशाखिनां वनस्य; एकस्य वा कल्पशाखिनः, कामधेनूनां यूथस्य; एकस्या वा कामधेनोः, कश्चिदस्ति विशेषः,

समाहृतानामुच्चारणमपि नानर्थकं संस्कारप्रचयहेतुत्वाद् एकैस्यवोच्चारणप्रचयवत्, तस्मात् श्रद्धाभक्तिज्ञानवैराग्याभ्यासदेशकालविशेषादिनिरपेक्षं भगवन्नामकीर्त्तनमेव महदवमानातिरिक्तमप्रारब्धं प्राचीनमंहः सर्वमेव संहरति, आवर्त्यमानं पुनर्दुर्व्वासनाविध्वंसद्वारेण श्रद्धाभक्तिवैराग्यज्ञानान्युत्पादयदपवर्गसाधनं; प्रारब्धपापनिवर्त्तकं च कदा चिदुपासकेच्छावशाद्,

महदवमानस्य तु भोगएव निवर्त्तकः तदनुग्रहो वा, न पुनरन्यत् किं चिदिति स्थितम्।

ननु चेनस्य कथमसद्गतिस्तेनापि भगवन्निन्दायै भगवन्नामावृत्तः कृतत्वाद् ? अतआह—वेनस्येति। भगवन्निन्दया प्रतिबद्धं सामर्थ्यं-

यस्य तत्। कथं तर्हि शिशुपालस्य सद्गतिस्तस्यापि भगवन्निन्दकत्वात्? अत आह–शिशुपालेति। निर्भरमतिशयेन यो वैरानुबन्धस्तेन परिकल्पिता या संपच्छ्रीमत्कृष्णविषयचित्तपरिपाकस्तस्मान्निन्दादोषस्य दग्धत्वादित्यर्थः। परिच्छिन्नेति। प्रदीपसहस्रस्य यावान्प्रकाशस्तावानेकस्य न भवतीति घटते परिच्छिन्नत्वात्। निरङ्कुशत्वमपरिच्छिन्नत्वम्। तत्रोचितं दृष्टान्तमाह–न खल्विति। तत श्चैकस्य श्रीरामनाम्नः सहस्रनामतुल्यत्वाभिधानं घटत इति भावः। तर्ह्यनेकेषामुच्चारणमनर्थकं? तत्राह—समाहृतानामिति। संस्कारो भगवद्विषयस्तस्य प्रचयः पौष्कल्यम्। उपसंहरति–तस्मादिति। श्रद्धाऽनेनास्ति परलोक इति बुद्धिः। भक्तिस्तत्रानुरागः। ज्ञानं परमात्मविषयम्। अभ्यासो नामावृत्तिः। देशः सत्क्षेत्रम्। कालः पूर्वाह्णादिः। आदिशब्देन शौचादि। महदवमानेति। भगवद्भक्तयोरपि सनकाद्यवमानादधःपातश्रवणात्। अप्रारब्धमिति। नामकीर्त्तनेऽपि जीवनदर्शनात्प्रारब्धमेतद्देहारम्भकम्। तादृश्यापनिवर्त्तकत्वं च न स्वभावादित्याह–कदा चिदिति। महदिति। यथा जयविजययोरेव।

नन्वेवं पुराणार्थे परिगृह्यमाणे स्मृतीनामत्यन्तबाध एव स्यात्? न च तदुचितं पुराणैरेव तदर्थस्याप्यङ्गीकारात्

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभि—

रित्यादिभिः? तत्र समाधिः—एकत्रैव प्रवृत्तिनियमोऽन्यत्र प्रवृत्तिं प्रतिबध्नाति, न च कीर्त्तने प्रवृत्तिनियमः; अश्रद्धोपहतत्वात् प्रायेण पुरुषबुद्धीनां, साङ्केत्यनिबन्धना प्रवृत्तिर्न्न नियन्तुं शक्यते, तस्मादस्त्येवावकाशः स्मृतीनां,-दृश्यते च सुकरदुष्करयोर्विकल्पो वैद्यकेषु, तत्र च किं चित्सुकरमपि कस्मै चित्स्वभावादेव न रोचते, अतस्तदर्थं दुष्करमपि चिकित्सान्तरं विधीयते; तद्वदिहापि दुर्व्वारदुर्व्वासनावासितचेतसः प्रायेण पराङ्मुखा एव पुरुषोत्तमात्पुरुषाः; तदर्थं प्रायश्चित्तान्तरविधानम्।

सुकरेषु नामकीर्त्तनेन पापक्षये सार्त्तप्रायश्चित्तेषु कोऽपि न प्रवर्त्ततेति शङ्कते—नन्विति। तदर्थस्येति। स्मृत्यर्थस्य तपोदानादे-

रित्यर्थः। सांकेत्यादीति। "सांकेत्यं पारिहास्यं वे"त्यादिश्लोकोक्तनामग्रहणे प्रवृत्तिनियमो नास्त्यनियतनिमित्तत्वादित्यर्थः। कथं वैद्यकेऽपि सुकरदुष्करयोर्विकल्पाभिधानं? तत्राह-तत्रेति। ततश्च सुकरदुष्करयोरपि नामकीर्त्तनस्मार्त्तप्रायश्चित्तयोर्विकल्प उपपद्यत इति भावः।

अत्र यत् कैश्चिदुच्यते—एकापूर्व्वप्रयुक्तमनेकमेकं दृष्टमुपकारं कुर्व्वत् विकल्प्यते यथा व्रीहियवादयः, स्मार्त्तपौराणयोः पुनरपूर्वभेदाददृष्टार्थत्वाच्च न विकल्प इति?

तत्र च वक्तव्यं—विकल्पनिराकरणेन किमनयोः समुच्चयः साध्यते किं वा व्यवस्था किं वाऽन्यतरस्यासाधनत्वं? समुच्चयव्यवस्थे तावन्निराकृते, अन्यतरस्यासाधनत्वेऽपि तावन्नामकीर्त्तनस्य नासाधनत्वं तत्परत्वात्पुराणानाम्, अतः स्मार्त्तस्यासाधनत्वमेव परिशिष्यते, न च तस्याप्यसाधनता, एकापूर्वप्रयुक्तानामेव विकल्प इति नियमाभावात्, लौकिकानामश्वशिविकाऽऽदीनामपि गमने विकल्पदर्शनाद्, भावार्थभेदेऽपि दाहच्छेदादीनां चिकित्सायां, न च दृष्टार्थानामेव विकल्पः, अदृष्टार्थयोरपि ग्रहणाग्रहणयोस्तद्दर्शनाद्, अथ तत्र विरुद्धसमुच्चयायोगाद्विकल्पः? तर्हीहापि निरपेक्षसाधनसमुच्चयायोगाद्विकल्प एव। अपि च—अनेकापूर्वप्रयुक्तानामपि क्रममुक्त्यर्थानां शाण्डिल्यदहरादिविद्यानां विकल्पो दृश्यते, न च वाचनिकोऽसाविति वाच्यं,-वाऽऽदीनामश्रवणात्, तस्मात्तुल्यार्थत्वमेव विकल्पे प्रयोजकं; नान्यद्, न च दर्शपौर्णमासज्योतिष्टोमादिसाध्यस्वर्गभेदवदेकस्य पापस्य विनाशव्यक्तिभारोऽस्ति, येन

ब्रह्महा द्वादशाब्दानि चरेद्, ब्रह्महा हरिं कीर्त्तयेदित्यनयोरपि भिन्नत्वाद् विकल्पः, तस्मादबाधितार्था एव स्मृतयः, न च विदुषः कर्मानुष्ठानायोगवद् अकृताधानस्योत्तरक्रतुकरणायोगवच्च, अकृतभगवत्कीर्त्तनस्य प्रायश्चित्तान्तरासंभवः, येन विद्वद्वाक्यवत् पूर्णाहुत्या सर्वान् कामानवाप्नोतीतिवाक्यवद्वा कीर्त्तनविषयाणामपि वाक्यानामानर्थक्यादर्थवादत्वमाश्रीयेत, तस्माद्यथाश्रुतग्रवार्थः पुराणवचनानामुदाहृतानामिति ।

एकेति । "चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्ये"ति चमसगोदोहनयोरप्प्रणयननिष्पत्तिरूपैकोपकारकत्वेऽपि न विकल्पस्ततउक्तम्—एकापूर्वप्रयुक्तमिति । तयोस्तु नैकापूर्वप्रयुक्तत्वं गोदोहनस्य काम्यत्वेन दर्शाद्यपूर्वप्रयुक्तत्वाभावात् । अवघातप्रोक्षणयोरेकाग्नेयापूर्वप्रयुक्तत्वेऽपि न विकल्पोऽत उक्तम्—एकमुपकारं कुर्वदिति । दृष्टमिति । अदृष्टार्थानां विकल्पायोगादिति भावः ।

उक्तं विकल्पप्रयोजकमङ्गीकृत्य दूषयति-तत्रेति । न च तस्यापीति । स्मृतिप्रामाण्यादिति भावः । उक्तं विकल्पप्रयोजकं दूषयति-एकेति । तत्र हेतुर्लौकिकानामिति हेतुगर्भं विशेषणम् । एकमुपकारं कुर्वदित्यंशं दूषयति-भावार्थेति । भावार्थभेदो धात्वर्थभेदस्तेन चोपकारभेदो लक्ष्यते । विकल्पदर्शनादित्यनुषङ्गः । चिकित्साफलत्वेऽपि दाहच्छेदयोर्धात्वर्थयोर्भिन्नत्वादुपकारभेदेनावश्यं भवितव्यमिति भावः । आदिशब्देन भेषजपानम् । अथ तत्रेति । ग्रहणाग्रहणयोरित्यर्थः । इहापीति । नामकीर्त्तनस्मार्त्तप्रायश्चित्तयोरित्यर्थः । तत्र व्रीहियववदश्वशिविकावदिति दृष्टान्तद्वयं द्रष्टव्यम् । क्रममुक्त्यर्थानामिति । तुल्यार्थत्वं विकल्पहेतुरुक्तः । न च शाण्डिल्यादिविद्यानां विकल्पे मानाभावः, उत्तरमीमांसायां तत्साधनादिति भावः । वाऽऽदीनामित्यादिशब्देन विफलपशद्वः । स्वयं विकल्पप्रयोजकमाह-तस्मादिति । ननु दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येकस्वर्गार्थत्वेऽपि न विकल्पस्ततः कथं तुल्यार्थत्वं विकल्पप्रयोजकं ? यदि च न तत्रैकः स्वर्गस्तर्हि प्रकृतेऽपि नैकः पापक्षय इति

न विकल्प इत्याशङ्क्याह—न चेति। एकस्य पापस्येति हेतुगर्भं विशेषणं, स्वर्गे हि वैजात्यं, प्रकृते त्वेकस्य पापस्य विनाशमुद्दिश्य नामकीर्त्तन-स्मार्तप्रायश्चित्तयोर्विधानाद्विकल्प इति भावः। ननु यथा "तरति ब्रम्ह-हत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" त्यश्वमेधज्ञानस्य ब्रम्हहत्या-विनाशकत्वं, यथा वा "पूर्णाहुत्या सर्वान्कामानाप्नोति" इत्याधानाङ्ग-पूर्णाहुतेः सर्वकामहेतुत्वं श्रूयमाणमर्थवादमात्रमेवं नामकीर्त्तने पापक्ष-यहेतुत्वं श्रूयमाणमर्थवादमात्रमस्तु ? तत्राह—न चेति। अश्वमेधज्ञान-पूर्णाहुत्योरश्वमेधाधानाङ्गत्वात्तावन्मात्रेण फलसिद्धौ क्रत्वनुष्ठानवैय-र्थ्यादर्थवादत्वं युक्तं, नामकीर्त्तनस्य तु स्मार्त्तप्रायश्चित्ताङ्गत्वे मानाभा-वात्पूर्वोक्तविधया स्मार्त्तप्रायश्चित्तानुष्ठानवैयर्थ्याभावाच्च पापक्षयश्रवणं नार्थवाद इति भावः। अक्षरार्थस्तु—अविदुषः कर्मानुष्ठानायोगो,-ऽशक्तेरकृताधानस्योत्तरक्रतुकरणायोगोऽप्यभावादाधानसाध्यत्वादग्नी-नाम्, एवमकृतनामकीर्त्तनस्य स्मार्त्तप्रायश्चित्ताभावो, न चेत्यन्वयः। विद्वद्वाक्यं "यउ चैनमेवं वेदे"ति पूर्वोक्तम्।

ननु यदि विनैव श्रद्धां कीर्त्तनादेव पापक्षयः तर्हि किमस्य प्रकरणस्य प्रयोजनम्? अनेन हि श्रद्धैव साध्यते, सत्यम्, अपगतेऽपि पापे मनोगतमश्रद्धानिबन्धनं-दुःखं न निवर्त्तते, ततस्तदपगमलक्षणाय मनःसमा-धानाय प्रकरणमेतदिति प्रकरणस्य प्रयोजनं, तस्मात्स-र्वमनवद्यम्।

सत्यमिति। नामकीर्त्तनाङ्गश्रद्धैतद्ग्रन्थप्रयोजनमिति न ब्रूमः किं-तु श्रद्धाऽस्तु वा मा वा, नामकीर्त्तनं पापक्षयहेतुरेव, एतद्ग्रन्थसा-ध्यश्रद्धायास्त्वश्रद्धानिबन्धनदुःखनिवृत्तिः प्रयोजनं, ततश्च मनसः समाधानम्।

आकृष्टिः कृतचेतसां सुमहतामुच्चाटनं चांहसा-
माचण्डालममूकलोकसुलभो वश्यश्च मोक्षश्रियः।
नो दीक्षां न च दक्षिणां न च पुरश्चर्यां मनागीक्षते
मन्त्रोऽयं रसनास्पृगेव फलति श्रीरामनामात्मकः॥१॥

ग्रन्थं परिसमाप्य नाममाहात्म्यानुसंधानलक्षणं मङ्गलं विधत्ते—

आकृष्टिरिति । आकर्षणं बुधानामित्यर्थः । वश्यं = वशीकरणम् । मूकाः केवलं मुक्तिस्त्रियं वशीकर्तुमसमर्थाः; इतरे त्वाचण्डालं नाममन्त्रेण वशीकर्तुं समर्था इत्यर्थः । प्रसिद्धं मन्त्रवैलक्षण्यमाह–नो दीक्षामिति । एवशब्देनाभ्यासाद्यनपेक्षत्वम् ॥ १ ॥

श्रीरामेति जनार्दनेति जगतां नाथेति नारायणे-
त्यानन्देति दयाधरेति कमलाकान्तेति कृष्णेति च ।
श्रीमन्नाममहामृताब्धिलहरीकल्लोलमग्नं मुहु—
र्मुह्यन्तं गलदश्रुधारमवशं मां नाथ नित्यं कुरु ॥२॥

नामकीर्त्तनाभिरुचिं प्रार्थयते-श्रीरामेति । नामैवामृताब्धिस्तल्लहरीकल्लोले मग्नं नाममात्रासक्तमित्यर्थः । मुह्यन्तं विषयानुसंधानशून्यत्वात् । अवशं देहानुसंधानरहितम् ॥ २ ॥

यदङ्कमालोकितुमाशु धावतां—
मुकुन्दयात्रोत्सवमीक्षितुं च यद् ।
अतश्च तच्च स्खलितं समं सता—
मतो न लज्जा स्खलतामपीह नः ॥३॥

भगवन्नाममाहात्म्यनिरूपणे स्वकृते संभावितं स्खलितं न दोषायेत्याह–यदङ्कमिति । अङ्कः कलङ्कः दुष्टं कर्मेत्यर्थः । दुष्टकर्मावलोकनाय धावतां यत्स्खलितं परमेश्वरोत्सवदर्शनाय धावतां यत्स्खलितं तद्द्वयं सतां न समं पूर्वं लज्जाऽऽवहं; द्वितीयं तद्विपरीतमित्यर्थः । इह भगवन्नाममाहात्म्यनिरूपणे स्खलतामप्यस्माकं न लज्जेति भावः ॥३॥

अपि च—

सुरसरित इव महामहाचल—
गहनगुहाजाड्यजालभेदिन्याः ।
हरिचरणजन्मभूमेः
स्खलितमपि कृतेरलंकृतिर्ननु नः ॥४॥

प्रत्युत तदेतत्स्खलितं गुण इत्याह–सुरसरित इति । महान्तोऽचलास्तेषां गहना गुहास्ता जाड्यजालानि मोहजालानि च भिनत्ति सुरसरिद्, कृतिरपि महाचलगुहावज्जाड्यजालानि मोहजालानि भिनत्ति ॥४॥

अथ वा—

हरिभक्तिराजमार्गे गुरुपदनखचन्द्रिकाधौते ।
श्रुतिजननीपदपद्धतिमनुसरतां नः कुतः स्खलितम् ॥५॥

इदानीं नः स्खलितमेव नास्तीत्याह—हरिभक्तीति । हरिं भजतां गुरुसंप्रदायवतां श्रुतिमनुसरतां च नः स्खलितं न संभवतीति भावः ॥५॥

धर्मः संविद्विषयविरतिः सिद्धयश्चाणिमाद्या—
यस्य श्रीमच्चरणनलिनद्वन्द्वपीठे लुठन्ति ।
यस्योन्मेषः सकलभुवनाम्भोजराजीनिमेषः
सोऽस्मत्स्वामी जयति जगतां मङ्गलं यस्य नाम ॥६॥

महेशं प्रणमति—धर्म इति । संविद् ज्ञानं । विषयविरतिर्वैराग्यम् । नलिनं कमलम् । उन्मेषः स्फूर्तिरस्य, भुवनान्येवाम्भोजानि तेषां राजी पङ्क्तिस्तस्या निमेषः संकोचो नाश इति भावः ॥ ६ ॥

अपि च—

यदङ्घ्रीति। यस्य विष्णोरङ्घ्रिकमलात्सदाशिवस्य च कबरीभराज्जटामण्डलाद्भूमिभागमागतस्य पाथसो जलस्य गङ्गाऽऽत्मकस्य नाम; अंहसां पापानां निवर्त्तकं, "गङ्गा गङ्गेति यो ब्रूयादित्यादि"वाक्यात्, तस्य परमात्मनो; विष्णोः शिवस्य वा नाम पापनिवर्त्तकमिति किं वक्तव्यमित्यर्थः ॥८॥

नाधाय किं चिदपनीय न किं चिदन्तः
स्वात्मैव येन सुखसिन्धुरगाधबोधः।
आविष्कृतः करुणया करवै किमस्य
तन्नाम्नि मग्नमिदमेव मनोऽस्तु पूजा ॥९॥

स्वकीयकृतार्थतामभिनयति—नाधायेति। वस्तुतोऽनाधेयातिशयत्वान्निष्कलङ्कत्वाच्चात्मन इयमुक्तिः। येन गुरुणा परमात्मना वा करुणयाऽऽत्माऽऽविष्कृतस्तस्य किं करवै? अतस्तन्नाम्नि नम्रमभिमुखं मन एव पूजाऽस्तु ॥ ९ ॥

झटिति जगतामंहस्तूलं दहद्दहनो महद्दहरकुहरध्वान्तं ध्वंसं नयन्नभसो मणिः।
किरणलहरी चान्द्री चेतश्चकोरचमत्कृतिर्भवतु भवतां नामज्योतिर्मुदे मदनद्रुहः ॥१०॥

इति श्रीमदनन्तानन्दरघुनाथपरमहंसपरिव्राजकाचार्यपादपद्मोपजीविनः श्रीमन्दसिंहसूनोर्लक्ष्मीधरस्य कृतौ भगवन्नामकौमुद्यां नामकीर्त्तनस्य केवलस्यैव पुरुषार्थसाधनत्वप्रतिपादनं नाम तृतीयः परिच्छेदः।

नन्दानन्दकरं करम्बितकरं हैयङ्गवीनैर्नवैः
शोभामादधतं नवीनजलदे मीलत्सुधांशोः स्फुटम्।
भक्तानां हृदयस्थितं सततमप्याभीरदृग्गोचरं-
गोपालं भजतां मनो मम सदा संसारविच्छित्तये ॥

वद जिह्वे वद जिह्वे चतुरे श्रीराम रामेति।
पुनरपि जिह्वे वद वद जिह्वे वद राम रामेति।

अनादौ संसारे निरवधिकजन्मस्वविरतै-
र्महाघैरेवान्तश्चितकलुषताया हि दहनम् ।
महीघ्राणां भस्मीकृतिगहनसंवर्त्तशिखिनो-
भवन्नाम्नः कुक्षेः कियदिव हरे ! खण्डनलवत् ॥
इति । शम् ।

---

झटितीति । मदनद्रुहः सदाशिवस्य नामज्योतिर्भवतां मुदे भवतु, ज्योतिष्टं विवृणोति—जगतामंहस्तूलं दहन् दहनः महतां दहरकुहरे स्वान्ताकाशे ध्वान्तमज्ञानलक्षणं नाशं नयन् नभसो मणिः सूर्यः, चान्द्रो किरणलहरीति ; चेतश्चकोराणां चमत्कृतिर्यस्याः सकाशादिति ॥१०॥

भगवन्नामकौमुद्याः प्रकाशोऽयं विनिर्मितः ।
संतोषयतु भक्तानां चेतःकुमुदमण्डलीम् ॥ १ ॥
इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ॥
अर्पिता तेन मे देवः प्रीयतां गोकुलेश्वरः ॥२॥

इति श्रीमदापदेवसूनुनाऽनन्तदेवेन विरचिते
श्रीभगवन्नामकौमुदीप्रकाशे तृतीयः परिच्छेदः समाप्तः ॥

सटिप्पनीकटीकासहित—

# श्रीभगवन्नामकौमुद्याः

## शुद्धिपत्रम्—

| पृ० प० | अशुद्धिः । | शुद्धिः । |
|---|---|---|
| ३।२० | उस्मेषो– | उन्मेषो– |
| ६।२८ | श्रते | श्रुते |
| १७।२३ | वा श्र | वाऽश्रं |
| १९।१० | भवत | भवति |
| ,, ।२७ | चिच्छ्र | चिच्छ्रू |
| २४।२१ | तेतो | लेनो |
| ,, ।२८ | वातु | वानु |
| ,, ।३१ | सत्र | सूत्र |
| २६। ७ | सव | सर्व |
| २७।५ | सत्रे | सूत्रे |
| ३८। १ | मुक्त | मुक्ते |
| ४२। २ | शाब्द | शाब्दा |
| ४३। १ | जना | आना |
| ५०।१८ | अन्यै | अन्ये |
| ५१।२१ | तद्र | तद्रु |
| ,, ।२८ | भिव | भिर्वि |
| ५७। २ | पत्तित्ति | पत्ति |
| ,, । ७ | माद | मादे |
| ६१।१६ | णोभ्य | ोभ्य |
| ६२। ८ | तद् | तद् |
| ७४।१२ | वक्त | वक्तृ |
| ८०।१३ | भावानामङ्ग | भावाङ्ग |
| ,, ।१६ | निजसुख | निजस्व |
| ८२।१९ | धाध्व | धाघ |
| ,, ।२६ | निज | हणम्,निज |
| ९०।२१ | णान्त | णन्ति |
| ९३।२१ | ष्यर्थ | प्यनर्थ |
| ९५। ४ | स्माद् | स्माद्‌ु |
| १००।२२ | बहृ | बहृ |
| १०३।२० | क्रश्ये | क्रुश्ये |
| ,, ।२२ | बहृ | बहृ |
| १०६। ६ | मर्थ | नर्थ |
| १११। ६ | ज्ञापि | ज्ञापि |
| ११९।११ | कीत्त | कीर्त्ति |
| १२२।२६ | सव | सर्व |
| १२५।२३ | मात्त | मोत्त |
| १२७।२३ | हात | हीत |
| १२९। २ | नाम्न | नर्नि |
| ,, । ६ | पाथ | पार्थ |
| ,, ।१७ | कैस्य | कस्यै |
| ,, ।२५ | वृत्तः | वृत्तेः |

निर्दिष्टाशुद्धीर्विहायापि यहुत्र ववयोर्मिथो जातो व्यत्ययो विज्ञैर्विवेच्यः ।

किंच—

द्व्यशीतितमपृष्ठस्थटीका ह्यशीतितमपृष्ठीयटीकाया अग्रिमा बोध्येति ।

देवीव्रतमें कुमारी-पूजन परम आवश्यक माना गया है। सामर्थ्य हो तो नवरात्रभर प्रतिदिन, अन्यथा समाप्तिके दिन नौ कुमारियोंके चरण धोकर उन्हें देवीरूप मानकर गन्ध-पुष्पादिसे अर्चन कर आदरके साथ यथारुचि मिष्टान्न भोजन कराना चाहिये एवं वस्त्रादिसे सत्कृत करना चाहिये। शास्त्रोंमें आया है कि एक कन्याकी पूजासे ऐश्वर्यकी, दोकी पूजासे भोग और मोक्षकी, तीनकी अर्चनासे धर्म, अर्थ, काम—त्रिवर्गकी, चारकी अर्चनासे राज्यपदकी, पाँचकी पजासे विद्याकी, छ:की पूजासे षट्कर्मसिद्धिकी, सातकी ... राज्यकी, आठकी अर्चासे सम्पदाकी और नौ कुमारी ...ओंकी पूजासे पृथ्वीके प्रभुत्वकी प्राप्ति होती है। ...री-पूजनमें दस वर्षतककी कन्याओंका अर्चन विहित दस वर्षसे ऊपरकी आयुवाली कन्याका कुमारी-पूजनमें ... किया गया है। दो वर्षकी कन्या कुमारी, तीन वर्षकी ...ी, चार वर्षकी कल्याणी, पाँच वर्षकी रोहिणी, छ: वर्षकी काली, सात वर्षकी चण्डिका, आठ वर्षकी शाम्भवी, नौ वर्षकी दुर्गा और दस वर्षवाली सुभद्रा-स्वरूपा होती है।

दुर्गा-पूजामें प्रतिदिनका वैशिष्ट्य रहना चाहिये। प्रतिपदाको केशसंस्कारक द्रव्य—आँवला, सुगन्धित तैल आदि केश-प्रसाधन संभार, द्वितीयाको बाल बाँधने-गूँथनेवाले रेशमी सूत, फीते आदि, तृतीयाको सिन्दूर और दर्पण आदि, चतुर्थीको मधुपर्क, तिलक और नेत्राञ्जन, पञ्चमीको अङ्गराग-चन्दनादि एवं आभूषण, षष्ठीको पुष्प तथा पुष्पमालादि समर्पित करे। सप्तमीको ग्रहमध्यपूजा, अष्टमीको उपवासपूर्वक पूजन, नवमीको महापूजा और कुमारीपूजा करे। दशमीको पूजनके अनन्तर पाठकर्ताकी पूजा कर दक्षिणा दे एवं आरतीके बाद विसर्जन करे। श्रवण-नक्षत्रमें विसर्जनाङ्ग-पूजन प्रशस्त कहा गया है। दशमांश हवन, तर्पण, मार्जन और ब्राह्मण-भोजन कराकर व्रतकी समाप्ति करे।

# विजयादशमी ( दशहरा )

## [ आश्विन शुक्ल दशमी ]




यह पर्व आश्विन शुक्ल दशमीको मनाया जाता है। ...स ...के लिये श्रवणनक्षत्रयुक्त, प्रदोषव्यापिनी, नवमीविद्धा ... प्रशस्त होती है। विजयादशमीका त्योहार वर्षा-...ऋतुकी समाप्ति तथा शरत्के आरम्भका सूचक है—

ईषमाससिता दशमी विजया शुभकर्मसुसिद्धिकरी कथिता।
श्रवणर्क्षयुता नितरां शुभगा नृपतेस्तु गमे जयसिद्धिकरी।
(मुहूर्तचिन्तामणि)

क्षत्रियोंका यह बहुत बड़ा पर्व है। इस दिन ब्राह्मण-लोग सरस्वतीपूजन एवं क्षत्रिय शस्त्रपूजन करते हैं—दुर्गा-विसर्जन, अपराजिता-पूजन, विजय-प्रयाण, शमीपूजन तथा नवरात्रपारण इस पर्वके महान् कर्म हैं। इस दिन संध्याके समय नीलकण्ठ पक्षीका दर्शन शुभ माना जाता है।

इस दिन प्रातःकाल देवीका विधिवत् पूजन करके नवमीविद्धा दशमीमें विसर्जन तथा नवरात्रका पारण करना चाहिये। इस दिन विधिपूर्वक अपराजितादेवीके साथ जया तथा विजया देवियोंके पूजनका भी विधान है और सायंकालमें दशमीपूजन तथा सीमोल्लंघनका विधान है। भारतवर्षके कोने-कोनेमें इस पर्वसे कुछ दिन पूर्व ही रामलीलाएँ शुरू हो जाती हैं। सूर्यास्त होते ही रावण, कुम्भकर्ण तथा मेघनादके पुतले जलाये जाते हैं। इस पर्वको भगवती (विजया)-के नामपर विजयादशमी कहते हैं। साथ ही इस दिन भगवान् श्रीरामचन्द्रजीने रावणका वध किया था, इसलिये भी इस पर्वको विजयादशमी कहा जाता है। प्राचीनकालमें राजा